# संस्कृत–सौरभम्

सम्पादक

वासुदेव शास्त्री, एम. ए., एम. ओ. एल.

दिल्ली

प्रकाशक

मेहरचन्द लछमणदास

अध्यक्ष, संस्कृत पुस्तकालय,

कूचा चेलां, दरियागंज, दिल्ली-६

(प्रेक्षागृह—१ अनसारी रोड, नया दरियागंज, दिल्ली-६)

तृतीय संस्करण १९६२ रु० २.५०

# किञ्चिन्निवेदनम्

संस्कृत-सौरभं नामायं संग्रहो हायर् सैकण्डरी स्कूल्ज इत्येवं प्रथमानेषु विद्यालयेषु संस्कृतमधिजिगांसूनां छात्राणां कृते कलित इति । तैः सुप्रवेशः सुग्रहश्च यथा स्यात्तथा प्रायतिषि । अत्र संग्रहे पृथग्विधं साहित्यं समाहृतम् । इहादिकवेर्भगवतो वाल्मीकेरमरकृतेः श्रीरामायणात् कविकुलपतेः कालिदासस्य क्रियाया अभिज्ञानशाकुन्तलात् पञ्चतन्त्राद् हितोपदेशात्तन्त्राख्यायिकायाश्चरकसंहितायास्तन्त्रान्तरेभ्यश्च प्रसादमाधुर्यगुम्फितास्ते ते सन्दर्भा अपोद्धृता येऽस्मदीयसंस्कृतेः परिचयाय समुदाचारशिक्षणाय सुरसरस्वत्यां चाभिरुचिवर्धनाय कल्पेरन् । नूत्ना अपि काश्चन जीवप्रणेतॄणां कृतयः समावेशिताः । निबन्धाश्चापि तत्तद्विषयिणोऽस्मद्विनिर्मिता विद्वदन्तरविनिर्मिताश्चेह धृता येन नव्यनिर्माणरसास्वादोऽपि सुलभः स्यात्, मृतेयं संस्कृतवागिति केषाञ्चित्साहसिकानां दुरुक्तं चापोहितं स्यात् । आशासेऽध्यापका अध्यायकाश्च समं समादरिष्यन्त इमां मे कृतिं समुत्साहं च मामकीनमेधयिष्यन्तीति विनीतवद् विनिवेद्य विरमति ।

देहल्याम्
श्रावणे शुक्लपञ्चम्याम् ।

विदां विधेयश्
चारुदेव

# किञ्चिन्निवेदनम्

संस्कृत-सौरभं नामायं संग्रहो हायर् सैकण्डरी स्कूल्ज़ इत्येवं प्रथमानेषु विद्यालयेषु संस्कृतमधिजिगांसूनां छात्राणां कृते कलित इति। तैः सुप्रवेशः सुग्रहश्च यथा स्यात्तथा प्रायतिषि। अत्र संग्रहे पृथग्विधं साहित्यं समाहृतम्। इहादिकवेर्भगवतो वाल्मीकेरमरकृतेः श्रीरामायणात् कविकुलपतेः कालिदासस्य क्रियाया अभिज्ञानशाकुन्तलात् पञ्चतन्त्राद् हितोपदेशात्तन्त्राख्यायिकायाश्चरकसंहितायास्तन्त्रान्तरेभ्यश्च प्रसादमाधुर्यगुम्फितास्ते ते सन्दर्भा अपोद्धृता येऽस्मदीयसंस्कृतेः परिचयाय समुदाचारशिक्षणाय सुरसरस्वत्यां चाभिरुचिवर्धनाय कल्पेरन्। नूत्ना अपि काश्चन जीवप्रणेतॄणां कृतयः समावेशिताः। निबन्धाश्चापि तत्तद्विषयिणोऽस्मद्विनिर्मिता विद्वदन्तरविनिर्मिताश्चेह धृता येन नव्यनिर्माणरसास्वादोऽपि सुलभः स्यात्, मृतेयं संस्कृतवागिति केषाञ्चित्साहसिकानां दुरुक्तं चापोहितं स्यात्। आशासेऽध्यापका अध्यायकाश्च समं समादरिष्यन्त इमां मे कृतिं समुत्साहं च मामकीनमेधयिष्यन्तीति विनीतवद् विनिवेद्य विरमति।

देहल्याम्
श्रावणे शुक्लपञ्चम्याम्।

विदां विधेयश्
चारुदेव

# विषय-सूची

ओं नमः परमात्मने ।

प्रथमः पाठः

# सरस्वती-वन्दना

शारदा शारदाम्भोज-वदना वदनाम्बुजे ।
सर्वदा सर्वदाऽस्माकं सन्निधिं सन्निधिं क्रियात् ॥१॥

सुरासुरासेवित - पादपङ्कजा
करे विराजत्कमनीयपुस्तका ।
विरिञ्चिपत्नी कमलासनस्थिता
सरस्वती नृत्यतु वाचि मे सदा ॥२॥

माणिक्य - वीणामुपलालयन्तीं
मदालसां मञ्जुलवाग्विलासाम् ।
माहेन्द्रनीलद्युति - कोमलाङ्गीं
मातङ्गकन्यां मनसा स्मरामि ॥३॥

श्रीमच्चन्दन-चर्चितोज्ज्वलवपुः शुक्लाम्बरा मल्लिका-
माला-लालित-कुन्तला प्रविलसन्मुक्तावलीशोभना ।
सर्वज्ञान-निधान-पुस्तक-धरा रुद्राक्षमालाङ्किता
वाग्देवी वदनाम्बुजे वसतु मे त्रैलोक्यमाता शुभा ॥४॥

या कुन्देन्दु-तुषार-हार-धवला या शुभ्रवस्त्रावृता
या वीणा-वर-दण्ड-मण्डित-करा या श्वेत-पद्मासना।
या ब्रह्माच्युत-शङ्कर-प्रभृतिभिर्देवैः सदा वन्दिता
सा मां पातु सरस्वती भगवती निश्शेष-जाड्यापहा ॥५॥

दोर्भिर्युक्ता चतुर्भिः स्फटिक-मणिमयीमक्षमालां दधाना
हस्तेनैकेन पद्मं सितमपि च शुकं पुस्तकं चाऽपरेण।
भासा कुन्देन्दु-शङ्खस्फटिकमणि-निभा भासमाना समाना
सा मे वाग्देवतेयं निवसतु वदने सर्वदा सुप्रसन्ना ॥६॥

### प्रश्नाः

१—उपरिलिखितेभ्यः पद्येभ्यः सरस्वत्याः कीदृशं स्वरूपमुपलभ्यत इति स्वकीयया वाचा वर्णय।

२—क्रियात् वसतु, पातु इति पदानां परिचयं देहि।

३—भगवती सरस्वती मातङ्गकन्येति किमर्थमुच्यते ?

४—सरस्वती-शब्दस्य के के पर्यायवाचिनः शब्दाः ?

५—निम्नलिखितेषु पदेषु समासविग्रहो विधेयः—वदनाम्बुजे, श्वेत-पद्मासना, त्रैलोक्यमाता।

## द्वितीयः पाठः

# श्रीमद्भगवद्गीता

श्रीभगवानुवाच—

मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ।
श्रद्धया परयोपेतास्ते मे युक्ततमा मताः ॥१॥

ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते ।
सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् ॥२॥

संनियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः ।
ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः ॥३॥

क्लेशोऽधिकतरस्तेषामव्यक्तासक्त-चेतसाम् ।
अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ॥४॥

ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः ।
अनन्येनैव योगेन मां ध्यायन्त उपासते ॥५॥

तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ।
भवामि न चिरात्पार्थ मय्यावेशित-चेतसाम् ॥६॥

मय्येव मन आधत्स्व मयि बुद्धिं निवेशय ।
निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः ॥७॥

अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम् ।
अभ्यासयोगेन ततो मामिच्छाप्तुं धनञ्जय ! ॥८॥

अभ्यासेऽप्यसमर्थोऽसि मत्कर्म-परमो भव ।
मदर्थमपि कर्माणि कुर्वन् सिद्धिमवाप्स्यसि ॥९॥

अथैतदप्यशक्तोऽसि कर्तुं मद्योगमाश्रितः ।
सर्वकर्मफलत्यागं ततः कुरु यतात्मवान् ॥१०॥

श्रेयो हि ज्ञानमभ्यासाज्ज्ञानाद्ध्यानं विशिष्यते ।
ध्यानात्कर्मफल-त्यागस्त्यागाच्छान्तिरनन्तरम् ॥११॥

अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च ।
निर्ममो निरहङ्कारः समदुःखसुखः क्षमी ॥१२॥

सन्तुष्टः सततं योगी यतात्मा दृढनिश्चयः ।
मय्यर्पितमनोबुद्धिर्यो मद्भक्तः स मे प्रियः ॥१३॥

यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ।
हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः ॥१४॥

अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः ।
सर्वारम्भपरित्यागी यो मद्भक्तः स मे प्रियः ॥१५॥

यो न हृष्यति न द्वेष्टि न शोचति न कांक्षति ।
शुभाशुभ-परित्यागी भक्तिमान् यः स मे प्रियः ॥१६॥

समः शत्रौ च मित्रे च तथा मानापमानयोः ।
शीतोष्णसुखदुःखेषु समः सङ्गविवर्जितः ॥१७॥

तुल्यनिन्दा-स्तुतिर्मौनी सन्तुष्टो येन केनचित् ।
अनिकेतः स्थिरमतिर्भक्तिमान् मे प्रियो नरः ॥१८॥

ये तु धर्म्यामृतमिदं यथोक्तं पर्युपासते।
श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः ॥१९॥

### प्रश्नाः

१—कीदृशो भक्तो भगवतः प्रिय इति स्वकीयया संस्कृतगिरा निरूपय।

२—निम्नलिखितेषु पदेषु प्रकृति-प्रत्ययप्रविभागं प्रदर्शय—

आवेश्य, समुद्धर्ता, अवाप्स्यसि, श्रद्दधानाः।

३—एषु पदेषु विग्रहनिर्देशपुरस्सरं समासाः नामभिः निर्देश्याः—

मदर्थम्, निर्ममः, कूटस्थम्, अनपेक्षः, शुभाशुभपरित्यागी, धर्म्यामृतम्।

४—यस्मान्नोद्विजते लोक इत्यत्र पञ्चमी कुतः?

५—भगवत्प्राप्तये भक्तेर्माहात्म्यमिति विषयमवलम्ब्य संस्कृतेन संक्षिप्तो निबन्धो विरच्यताम्।

## तृतीयः पाठः

# भासुरकसिंह-कथा (क भागः)

कस्मिंश्चिद्वने भासुरको नाम सिंहः प्रतिवसति स्म। अथासौ वीर्यातिरेकान्नित्यमेवानेकान् मृगशशकादीन् व्यापादयन्न उपरराम। अथान्येद्युस्तद्वनजाः सर्वे सारङ्ग-वराह-महिष-शशकादयो मिलित्वा तमभ्युपेत्य प्रोचुः—स्वामिन्! किमनेन सकलमृगवधेन नित्यमेव? यतस्तव एकेनापि मृगेण तृप्तिर्भवति। तत् क्रियतामस्माभिः सह

समयधर्म्मः। अद्य प्रभृति तव अत्रोपविष्टस्य जातिक्रमेण प्रतिदिनमेको मृगो भक्षणार्थं समेष्यति। एवं कृते तव तावत्प्राणयात्रा क्लेशं विनापि भविष्यति, अस्माकञ्च पुनः सर्वोच्छेदनं न स्यात्। तदेष राजधर्मोऽनुष्ठीयताम्। उक्तञ्च—

शनैः शनैश्च यो राज्यमुपभुङ्क्ते यथाबलम्।
रसायनमिव प्राज्ञः स पुष्टिं परमां व्रजेत् ॥१॥
विधिना मन्त्रयुक्तेन रूक्षापि मथितापि च।
प्रयच्छति फलं भूमिररणीव हुताशनम् ॥२॥
प्रजानां पालनं शस्यं स्वर्गकोशस्य वर्द्धनम्।
पीडनं धर्मनाशाय पापायायशसे स्थितम् ॥३॥
लोकानुग्रहकर्त्तारः प्रवर्द्धन्ते नरेश्वराः।
लोकानां संक्षयाच्चैव क्षयं यान्ति न संशयः ॥४॥

अथ तेषां तद्वचनमाकर्ण्य भासुरक आह—अहो! सत्यमभिहितं भवद्भिः, परं यदि ममोपविष्टस्यात्र नित्यमेव नैकः श्वापदः समागमिष्यति तन्नूनं सर्वानपि भक्षयिष्यामि। अथ ते तथैव प्रतिज्ञाय निर्वृतिभाजः तत्रैव वने निर्भयाः पर्यटन्ति। एकश्च प्रतिदिनं क्रमेण याति। वृद्धो वा, वैराग्ययुक्तो वा शोकग्रस्तो वा पुत्रकलत्रनाशभीतो वा तेषां मध्यात्तस्य भोजनार्थं मध्याह्नसमये उपतिष्ठते। अथ कदाचित् जातिक्रमाच्छशकस्य अवसरः समायातः। समस्तमृगैः

प्रेरितोऽनिच्छन्नपि मन्दं मन्दं गत्वा तस्य च वधोपायं चिन्तयन् वेलातिक्रमं कृत्वा व्याकुलितहृदयो यावद्गच्छति तावत् मार्गे गच्छता तेनैकः कूपः संदृष्टः। यावत्कूपोपरि याति तावत्कूपमध्ये आत्मनः प्रतिबिम्बं ददर्श। दृष्ट्वा च तेन हृदये चिन्तितम्—यद्भव्य उपायोऽस्ति, अहं भासुरकं प्रकोप्य स्वबुद्ध्या अस्मिन् कूपे पातयिष्यामि। अथासौ दिनशेषे भासुरकसमीपं प्राप्तः। सिंहोऽपि वेलातिक्रमेण क्षुत्क्षामकण्ठः कोपाविष्टः सृक्कणी परिलेलिहन् व्यचिन्तयत्—अहो ! प्रातराहाराय निःसत्त्वं वनं मया कर्त्तव्यम्। एवं चिन्तयतस्तस्य शशको मन्दं मन्दं गत्वा प्रणम्य अग्रे स्थितः। अथ तं प्रज्वलितात्मा भासुरको भर्त्सयन्नाह—रे शशकाधम ! एकतस्तावत् त्वं लघुः प्राप्तोऽपरतः वेलातिक्रमेण, तदस्मादपराधात् त्वां निपात्य प्रातः सकलान्यपि मृगकुलानि उच्छेदयिष्यामि। अथ शशकः सविनयं प्रोवाच—स्वामिन् ! नापराधो मम, न च सत्त्वानाम्, तत् श्रूयतां कारणम्। सिंह आह—सत्वरं निवेदय यावन्मम दंष्ट्रान्तर्गतो न त्वं भविष्यसि इति।

शशक आह—स्वामिन् ! समस्तमृगैरद्य जातिक्रमेण मम लघुतरस्य प्रस्तावं विज्ञाय ततोऽहं पञ्चशशकैः समं प्रेषितः। ततश्च अहमागच्छन्नन्तराले महता केनचिदपरेण सिंहेन विवरान्निर्गत्य अभिहितः—रे ! क्व प्रस्थिता यूयम् ? अभीष्टदेवतां स्मरत। ततो मयाभिहितम्—वयं स्वामिनो भासुरकसिंहस्य सकाशे आहारार्थं समयधर्मेण गच्छामः।

## प्रश्नाः

१—अधोलिखितानां पदानां प्रक्रियां संक्षेपतो ब्रूहि—

उपरराम, समेष्यति, व्रजेत्, परिलेलिहन्, प्रोवाच ।

२—"तेषां मध्यात्तस्य भोजनार्थं मध्याह्नसमये उपतिष्ठते—" इति वाक्ये उपतिष्ठते इत्यत्र आत्मनेपदं कुतः ?

३—सिंहस्य विनाशाय शशकः कमुपायं चिन्तितवान् ?

४—एषां शब्दानामर्थान् लिख—

सृक्कणी, श्वापदः, रसायनम्, अरण्णि: ।

५—एषु विभक्तेरुपपादनं क्रियताम्—

क—यतस्तव एकेनापि मृगेण तृप्तिर्भवति ।

ख—पीडनं धर्मनाशाय ।

ग—एवं कृते तव प्राणयात्रा क्लेश विनापि भविष्यति ।

६—अत्र तिङ्वाच्य-परिवर्तनं क्रियताम्—

क—तदेष राजधर्मोऽनुष्ठीयताम् (त्वया) ।

ख—स आत्मनः प्रतिबिम्बं दृष्टवान्

ग—शशको मन्दं मन्दं गत्वा प्रणम्य तस्य अग्रे स्थितः ।

## चतुर्थः पाठः

# भासुरकसिंह-कथा (ख भागः)

ततः तेन अभिहितम्—यद्येवं तर्हि मदीयमेतद्वनं, मया सह समयधर्मेण समस्तैरपि श्वापदैर्वर्तितव्यम्। चौररूपः स भासुरकः। अथ यदि सोऽत्र राजा ततो विश्वासस्थाने चतुरः शशकानत्र धृत्वा तमाहूय द्रुततरमागच्छ, येन यः कश्चिदावयोर्मध्यात् पराक्रमेण राजा भविष्यति स सर्वानेतान् भक्षयिष्यति इति। ततोऽहं तेनादिष्टः स्वामिसकाशमभ्यागतः, एतत् वेलाव्यतिक्रमकारणम्। तदत्र स्वामी प्रमाणम्। तच्छ्रुत्वा भासुरक आह—भद्र! यदि एवं तत् सत्वरं दर्शय मे तं चौरसिंहम्, येन अहं मृगकोपं तस्य उपरि क्षिप्त्वा स्वस्थो भवामि। उक्तञ्च—

भूमिर्मित्रं हिरण्यञ्च विग्रहस्य फलत्रयम्।
नास्त्येकमपि यद्येषां न तं कुर्यात्कथञ्चन ॥१॥
यत्र न स्यात्फलं भूरि यत्र च स्यात्पराभवः।
न तत्र मतिमान्युद्धं समुत्पाद्य समाचरेत् ॥२॥

शशक आह—स्वामिन्! सत्यमिदम्, स्वभूमिहेतोः परिभवाच्च युध्यन्ते क्षत्रियाः, परं स दुर्गाश्रयः, दुर्गान्निष्क्रम्य वयं तेन विष्कम्भिताः। ततो दुर्गस्थो दुःसाध्यो भवति रिपुः। उक्तञ्च—

न गजानां सहस्रेण न च लक्षेण वाजिनाम्।
तत्कृत्यं साध्यते राज्ञां दुर्गेणैकेन यद्भवेत् ॥३॥

तच्छ्रुत्वा भासुरक आह—भद्र ! दुर्गस्थमपि दर्शय तं चौर-सिंहं येन व्यापादयामि। उक्तञ्च—

जातमात्रं न यः शत्रुं रोगञ्च प्रशमं नयेत्।
महाबलोऽपि तेनैव वृद्धिं प्राप्य स हन्यते ॥४॥

तथा च—

उत्तिष्ठमानस्तु परो नोपेक्ष्यः पथ्यमिच्छता।
समौ हि शिष्टैराम्नातौ वर्त्स्यन्तावामयः स च ॥५॥

अपि च—

उपेक्षितः क्षीणबलोऽपि शत्रुः
प्रमाद-दोषात् पुरुषैर्मदान्धैः।
साध्योऽपि भूत्वा प्रथमं ततोऽसौ
असाध्यतां व्याधिरिव प्रयाति ॥६॥

तथा च—

आत्मनः शक्तिमुद्वीक्ष्य मानोत्साहौ च यो व्रजेत्।
बहून् हन्ति स एकोऽपि क्षत्रियान् भार्गवो यथा ॥७॥

शशक आह—अस्त्येतत्तथापि बलवान् स मया दृष्टः, तत् न युज्यते स्वामिनस्तस्य सामर्थ्यमविदित्वा गन्तुम्। उक्तञ्च—

अविदित्वात्मनः शक्तिं परस्य च समुत्सुकः ।
गच्छन्नभिमुखो नाशं याति वह्नौ पतङ्गवत् ॥८॥
यो बलात्प्रोन्नतं याति निहन्तुं सबलोऽप्यरिम् ।
विमदः स निवर्त्तेत शीर्णदन्तो गजो यथा ॥९॥

भासुरक आह—भोः ! किं तव अनेन व्यापारेण ? दर्शय मे तं दुर्गस्थमपि । अथ शशक आह—यद्येवं तर्हि आगच्छतु स्वामी । एवमुक्त्वा अग्रे व्यवस्थितः । ततश्च तेन आगच्छता यः कूपो दृष्टोऽभूत् तमेव कूपमासाद्य भासुरकमाह—स्वामिन् ! कस्ते प्रतापं सोढुं समर्थः ? त्वां दृष्ट्वा दूरतोऽपि चौरसिंहः प्रविष्टः स्वं दुर्गम्, तदागच्छ येन दर्शयामि इति । भासुरक आह—दर्शय मे दुर्गम् । तदनु दर्शितस्तेन कूपः । ततः सोऽपि मूर्खः सिंहः कूपमध्ये आत्मप्रतिबिम्बं जलमध्यगतं दृष्ट्वा सिंहनादं मुमोच । ततः प्रतिशब्देन कूपमध्याद् द्विगुणतरो नादः समुत्थितः । अथ तेन तं शत्रुं मत्वा आत्मानं तस्य उपरि प्रक्षिप्य प्राणाः परित्यक्ताः । शशकोऽपि हृष्टमनाः सर्वमृगान् आनन्द्य तैः सह प्रशस्यमानो यथासुखं तत्र वने निवसति स्म । अतोऽहं ब्रवीमि—यस्य बुद्धिर्बलं तस्य ॥

—पञ्चतन्त्रात्

प्रश्नाः

१—यस्य बुद्धिस्तस्य बलम् इति सिद्धान्तस्योदाहरणं कथं प्रस्तूयतेऽनया कथयेति कथय ।

२—उत्तिष्ठमान इति पदे आत्मनेपदं कुतः ?

३—'अविदित्वा' इत्यत्र ल्यप् कुतो न ?

४—एषां पदानां परिचयं देहि—

सोढुम्, वत्स्यन्तौ, मुमोच, आनन्द्य, आहूय ।

५—समयधर्म इत्यनेन कोऽभिप्रायः ?

६—सिंहः शशकेन कथं विनाशं प्रापितः ?

७—अत्र तिङ्वाच्यपरिवर्तनं क्रियताम्—

क—तदा तेन अभिहितम् ।

ख—ततोऽहं तेनादिष्टः ।

## पञ्चमः पाठः

# अण्डप्रमाणकं धान्यम्

कस्मिंश्चिद्दिने गिरिनिर्दरप्रदेशे मध्ये सरेखं धान्याकारं, किन्तु अण्डवत्स्थूलं किमपि वस्तु कैरपि डिम्भकैरुपालम्भि। तत्पथेन गच्छता पान्थेन केनापि तदवलोक्य, एकया वराटिकया क्रीतं नगरं नीत्वा कौतूहलकरमिति राज्ञे विक्रीतं च ।

राजा तु स्वीयान् पण्डितानाहूय 'किमिदं वस्तु, निर्धारयत' इत्युवाच । बहुज्ञास्ते मुहुर्विचारयन्तोऽपि तत्स्वरूपमधि-

गन्तुं न शेकुः। एवमेव तस्मिन् वस्तुनि वातायनमूलदेशमधिशयान, अन्तरुड्डीय कुक्कुटी काचन तच्चञ्च्वा अविध्यत् यावत् तत्र द्वारमजनि। ततस्सर्वैरपि तद्धान्यमित्यबुध्यत। विद्वांसस्ते राजानमासाद्योचुः तदेतद्धान्यम् इति।

श्रुत्वैतन्नृपतिः परं विसिष्मिये, आज्ञापयामास च पण्डितान् 'ईदृशं धान्यं कदा कुत्र प्ररूढमिति मृगयत' इति। पण्डिता आलोचयामासुः स्वपुस्तकेषु च व्यचिन्वन्, परन्तु तद्विषयकं न किमपि ददृशुः। ततः प्रत्यावृत्तास्ते नृपमवादिषुः 'न वयं पारयामस्ते दातुमुत्तरम्; नैतदधिकृत्य नो ग्रन्थेषु किमप्यस्ति; कर्षकाः प्रष्टव्याः, कदाचित्तेषु कैरपि स्वपितृभ्यः कदा कुत्र धान्यमियत्प्रमाणं प्ररुरोहेति श्रुतं स्यात्' इति।

ततश्च राज्ञाऽऽज्ञा दत्ता वर्षिष्ठः कोऽपि कर्षको ममाग्रत आनेतव्य इति। भृत्यैस्तादृशः पुरुष आसादितः, राज्ञस्सकाशमानीतश्च। वृद्धः, आनताङ्गः भस्मपाण्डुरः, दन्तशून्यश्च स आलम्बनयष्टिद्वयसाह्येन स्खलित-स्खलितं भूपतेस्सन्निधिमाजगाम।

तस्मै तद्धान्यं नृपतिर्दर्शयामास। वृद्धस्तु न तद् द्रष्टुमपि शशाक; करे त्वादाय स्पर्शेन विममर्श। राजा पप्रच्छ—आर्य वृद्ध! एवञ्जातीयकं धान्यं कुत्र प्ररुरोहेति त्वया वक्तुं शक्यं किम्? अपि कदाचित्त्वया ईदृशं धान्यं क्रीतम्, उप्तं वा तव क्षेत्रे? वृद्धस्तु तावद् बधिर आसीद् यन्नृपोक्तं न स शुश्राव;

अतिकृच्छ्रेणैव तदुक्तं बुध्यते स्म ।

अन्ततश्चोत्तरमदात्—एतत्सदृशं न मया उप्तं, न वा उच्चितं मत्क्षेत्रेषु, न वा कदापि ईदृशं मया क्रीतम् । यत्तु धान्यमस्माभिः क्रीतं, तद्धान्यं सदैव प्रतन्वेव बभूव, यथा तदधुना वर्तते । किन्तु मदीयः पिता भवद्भिः प्रष्टव्यः, कदाचित्तेन श्रुतं स्यात् कुत्रैतादृशं धान्यं प्ररूढमिति ।

एवं च वृद्धस्य पिता नृपेणाकारितः । स लब्धो, नृपसन्निधिं प्रापितश्च । एकया प्रचारसाह्ाय्यष्ट्या स सञ्चरमाण आजगाम । नृपो धान्यं प्रदर्शयामास । द्रष्टुं शक्त एव स वृद्धः कर्षकः तद्धान्यं सुष्ठु न्यरूपयत् । राजा च पप्रच्छ—

अयि वृद्ध ! कुत्र धान्यमीदृशं बभूवेति किं नो निवेदयितुं न शक्नोषि त्वम् ? ईदृशं किमपि कदापि त्वया क्रीतं वा, त्वत्क्षेत्रेषु उप्तं वा ?

वृद्धतरोऽयं किञ्चिदिव मन्थरश्रवणोऽपि स्वपुत्रापेक्षया समीचीनतरं श्रोतुं शशाक ।

स उत्तरयामास—नैव; नैव मया धान्यमीदृशमुप्तमुच्चितं वा मत्क्षेत्रे । क्रयस्तु नासीदेव । न मया किमपि क्रीतं, यतो मदीये काले पणो नोपायुज्यत; सर्वोऽपि स्वं स्वं धान्यमपुष्यत् । वस्त्वन्तरापेक्षायां सत्यां मिथो विनिमयमकुर्म । कुत्रेदृशं धान्यं रुरोहेति नाहं वेद्मि । अस्मद्धान्यं तु स्थूलतरमासीदेव, अद्यतन-धान्यादधिकमेव च पिष्टमददात्, परं तु एतादृशं किमपि कदापि

नाहमालोकयम् । किन्तु पित्रा मे कथ्यमानमिदं मया श्रुतं मदीये काले धान्यं स्थूलतरमवर्धत, त्वद्धान्यापेक्षया भूयश्च प्रायच्छत् पिष्टमिति । तं प्रष्टुमर्हन्ति भवन्तः ।

ततो वृद्धस्यास्य पित्रे सन्देशं नृपः प्रेषयामास । सोऽप्युपलब्धः, राज्ञः पुरस्तादुपस्थापितश्च । स अनायासमेव प्रचचार, विना चालम्बनयष्टिम्; चक्षुरस्य विशदमासीत्, श्रवणं च स्पष्टम्; व्यक्तं च स बभाषे । राजा तं प्रदर्शयामास तद्धान्यम् । स वृद्धः पितामहः तदालुलोके, हस्ते तत इतः परिवर्त्य च निरूपयामास ।

'चिरादीदृशमुत्तमं धान्यं पश्यामि' इति वदन् तस्य खण्डमेकमखादत्, आस्वादयच्च । उवाच च—सैवास्य जातिः इति नृपोऽवादीत्—ब्रूहि पितामह ! कदा कुत्रैतादृशं धान्यं वर्धितम् ? एतादृशं कदापि त्वया क्रीतं वा, उप्तं वा त्वत्क्षेत्रे ? वृद्धः प्रत्युवाच—मदीये काले धान्यमेतादृशं सर्वत एव प्ररोहशीलमासीत् । मदीये बाल्ये एतादृशेनैव धान्येनाहमवर्तयम्, अन्यानभ्यवाहारयं च । ईदृशमेव धान्यमस्माभिरुप्तम्, उच्चितं खले पावितं च ।

नृपतिः पप्रच्छ—ब्रूहि पितामह ! किं तत् त्वया कुतोऽपि क्रीतमुत सर्वं तत् त्वयैवारोप्य वर्धितम् ?

वृद्धो मन्दं जहास, प्रत्यब्रवीच्च—मदीये काले नेदृशं पापं केनापि चिन्तितं यदाहारभूतद्रव्यस्य क्रयः, विक्रयो वा; पणं प्रति च न किञ्चिदपि वयमजानीम । एकैकस्य पुंसः पर्याप्तं स्वीयं धान्यं बभूव ।

एवं चेत्, पितामह, ब्रूहि कुत्र ते क्षेत्रं बभूव, कुत्र चेदृशं धान्यं त्वया बीजाकृतम् ?

पितामहः प्रत्युवाच—ऐश्वरी पृथिव्येव मे क्षेत्रम्, यत्र मया कृष्टं तत्रैव मे क्षेत्रमभूत् । क्षेत्रममूल्यमासीत्, न कोऽपि तत् वस्तु स्वीयमित्याह । कायपरिश्रम एवैकस्मिन् पुरुषाः स्वत्वबुद्धिम-बध्नन् ।

'प्रश्नद्वयमपि मे व्याख्याहि' इति पप्रच्छ भूपालः । अयं प्रथमः —तदा कुतो धरणिरीदृशं धान्यमसूत, अद्य च तथाकरणाद्विरता ? द्वितीयोऽयम्—कुतस्ते पौत्रः द्वयोर्यष्ट्योरालम्बनेन प्रचरति, पुत्र एकस्याः त्वं तावत् नैकस्या अपि ? चक्षुस्ते दीप्तम् दन्ता दृढाः, भाषणं व्यक्तं, श्रवः प्रियं च । कथमेते विषया एवं संपन्नाः ?

वृद्धोऽपि प्रत्याह—संप्रत्येते विषया एवं विपन्नाः यतो जना अद्य स्वीयेन परिश्रमेण जीवयात्राकरणाद् विरताः, परपरिश्रमा-श्रयणशीलास्सञ्जाताः । प्राचीने काले ईश्वरविहितं विधिमनु-सृत्य जना जीवयात्रां चक्रुः । यत्स्वकीयं तत्तेषामभवत्, केन-स्वित्परेणोत्पादिते न तेऽगृध्यन् इति ।

(रूसीभाषायां टाल्स्टायेन रचितायाः कथाया मद्रासविश्वविद्यालय-संस्कृत-विभागाध्यक्ष डा० वे राघवन् कृतः संस्कृत-प्रतिभापत्रिकायां प्रकाशितः संस्कृतानुवादः)

### प्रश्नाः

१— निम्ननिर्दिष्टेषु पदेषु प्रकृति-प्रत्ययप्रविभागः प्रदर्श्यताम्—

विसिष्मिये, अवादिषुः, विममर्श, शुश्राव, प्ररूढम्, उप्तम्, रुरोह, ददौ, प्रेषयामास, अजानीम, अगृध्यन् ।

२—बभूव, क्रीतम्, शक्नोति, विनिमयम्, विशदम्—इत्येतेषां पदानां स्ववाक्येषु प्रयोगं कुरु ।

३—अधोलिखितेषु वाक्येषु तिङ्वाच्यपरिवर्तनं कुरु—

क—किमपि वस्तु कैरपि डिम्भकैरुपालम्भि ।

ख—एतत्सदृश न मया उप्तम् ।

ग—न मया किमपि क्रीतम् ।

घ—ईदृशमेव धान्यमस्माभिरुप्तम् ।

४—अस्याः कथायाः सारः स्वकीयेन संस्कृतेनोच्यताम् ।

## षष्ठः पाठः

# भर्तृहरेः पद्यानि

**निन्दन्तु नीतिनिपुणा यदि वा स्तुवन्तु**
**लक्ष्मीः समाविशतु गच्छतु वा यथेष्टम् ।**
**अद्यैव वा मरणमस्तु युगान्तरे वा**
**न्याय्यात्पथः प्रविचलन्ति पदं न धीराः ॥१॥**

प्रारभ्यते न खलु विघ्नभयेन नीचैः
प्रारभ्य विघ्नविहता विरमन्ति मध्याः ।
विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः
प्रारब्धमुत्तमगुणा न परित्यजन्ति ॥२॥

मनसि वचसि काये पुण्यपीयूषपूर्णा-
स्त्रिभुवनमुपकार-श्रेणिभिः प्रीणयन्तः ।
परगुण-परमाणून् पर्वतीकृत्य नित्यं
निजहृदि विकसन्तः सन्ति सन्तः कियन्तः ॥३॥

भवन्ति नम्रास्तरवः फलोद्गमै-
र्नवाम्बुभिर्दूर-विलम्बिनो घनाः ।
अनुद्धताः सत्पुरुषाः समृद्धिभिः
स्वभाव एवैष परोपकारिणाम् ॥४॥

संपत्सु महतां, चित्तं भवेदुत्पल-कोमलम्
आपत्सु च महाशैल-शिला-संघात-कर्कशम् ॥५॥

विपदि धैर्यमथाभ्युदये क्षमा
सदसि वाक्पटुता युधि विक्रमः ।
यशसि चाभिरुचिर्व्यसनं श्रुतौ
प्रकृतिसिद्धमिदं हि महात्मनाम् ॥६॥

आरम्भ-गुर्वी क्षयिणी क्रमेण
लघ्वी पुरा वृद्धिमती च पश्चात् ।

दिनस्य पूर्वार्ध-परार्ध-भिन्ना
छायेव मैत्री खल-सज्जनानाम् ॥७॥

लोभश्चेदगुणेन किं, पिशुनता यद्यस्ति किं पातकैः,
सत्यं चेत्तपसा च किं, शुचि मनो यद्यस्ति तीर्थेन किम् ।
सौजन्यं यदि किं बलेन, महिमा यद्यस्ति किं मण्डनैः,
सद्विद्या यदि किं धनैरपयशो यद्यस्ति किं मृत्युना ॥८॥

दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य ।
यो न ददाति न भुंक्ते तस्य तृतीया गतिर्भवति ॥९॥

यस्यास्ति वित्तं स नरः कुलीनः
स पण्डितः स श्रुतवान् गुणज्ञः ।
स एव वक्ता स च दर्शनीयः
सर्वे गुणाः काञ्चनमाश्रयन्ते ॥१०॥

कुसुमस्तबकस्येव द्वे वृत्ती तु मनस्विनः ।
†मूर्ध्नि वा सर्वलोकस्य शीर्यते वन एव वा ॥११॥

जाड्यं धियो हरति सिञ्चति वाचि सत्यं
मानोन्नतिं दिशति पापमपाकरोति ।
चेतः प्रसादयति दिक्षु तनोति कीर्तिं
सत्सङ्गतिः कथय किं न करोति पुंसाम् ॥१२॥

विद्या नाम नरस्य रूपमधिकं प्रच्छन्नगुप्तं धनं
विद्या भोगकरी यशःसुखकरी विद्या गुरूणां गुरुः ।

पाठान्तर—†सर्वेषां मूर्ध्नि वा तिष्ठेद् विशीर्येत वनेऽथवा ।

विद्या बन्धुजनो विदेशगमने विद्या परा देवता
विद्या राजसु पूज्यते नहि धनं, विद्याविहीनः पशुः ॥१३॥

केयूराणि न भूषयन्ति पुरुषं हारा न चन्द्रोज्ज्वला
न स्नानं न विलेपनं न कुसुमं नालंकृता मूर्धजाः ।
वाण्येका समलङ्करोति पुरुषं या संस्कृता धार्यते
क्षीयन्तेऽखिलभूषणानि सततं वाग्भूषणं भूषणम् ॥१४॥

हर्तुर्याति न गोचरं किमपि शं पुष्णाति यत्सर्वदा-
प्यर्थिभ्यः प्रतिपाद्यमानमनिशं प्राप्नोति वृद्धिं पराम् ।
कल्पान्तेष्वपि न प्रयाति निधनं विद्याख्यमन्तर्धनं
येषां तान्प्रति मानमुज्झत नृपाः ! कस्तैः सह स्पर्धते ॥१५॥

अधिगतपरमार्थान्पण्डितान् मावमंस्था-
स्तृणमिव लघु लक्ष्मीर्नैव तान् संरुणद्धि ।
अभिनवमदलेखा - श्यामगण्ड - स्थलानां
न भवति बिसतन्तुर्वारणं वारणानाम् ॥१६॥

## प्रश्नाः

१—एतेषां पदानां परिचयं कारय—

न्याय्यात्, प्रतिहन्यमानाः, पर्वतीकृत्य, भुंक्ते, शीर्यते, क्षीयन्ते, उज्झत, संरुणद्धि, संस्कृता, अवमंस्थाः ।

२—एषु पदेषु समासनिर्देशपुरस्सरं विग्रहः प्रदर्शनीयः—

अनुद्धताः, उत्पलकोमलम्, प्रकृतिसिद्धम्, सत्संगतिः, वाग्भूषणम्, विसतन्तुः, अभिनवमदलेखा-श्यामगण्डस्थलानाम् ।

३—'तृतीया गतिर्भवति' इत्यत्र तृतीया गतिः का ?

४—विद्यायाः सत्संगतेश्च कीदृशं माहात्म्यं भर्तृहरिणा प्रतिपादितमिति स्वकीयया सरलया संस्कृतगिरा प्रतिपादय ।

५—भर्तृहरिविषये किं ते ज्ञातम् ? तेन के के ग्रन्थाः प्रणीताः ?

६—दा, पुष्, हृ—इत्येतेषां धातूनां लटि रूपाणि लिख ।

७—द्वयी, शम्, गोचरम्—इत्येतेषां पदानां कोऽर्थः ?

## सप्तमः पाठः

# जीर्णधनवणिक्-कथा

अस्ति कस्मिंश्चिदधिष्ठाने जीर्णधनो नाम वणिक्पुत्रः । स च विभव-क्षयात् देशान्तर-गमन-मना व्यचिन्तयत्—

यत्र देशेऽथवा स्थाने भोगाः भुक्ताः स्ववीर्य्यतः ।
तस्मिन्विभवहीनो यो वसेत्स पुरुषाधमः ॥१॥

तथा च—

यत्राहङ्कारयुक्तेन चिरं विलसितं पुरा ।
दीनं वदति तत्रैव यः परेषां स निन्दितः ॥२॥

तस्य च गृहे लोहभारघटिता पूर्वपुरुषोपार्जिता तुला आसीत्। ताञ्च कस्यचित् श्रेष्ठिनो गृहे निक्षेपभूतां कृत्वा देशान्तरं प्रस्थितः। ततः सुचिरं कालं देशान्तरं यथेच्छया भ्रान्त्वा पुनः स्वपुरमागत्य तं श्रेष्ठिनमुवाच—भोः श्रेष्ठिन्! दीयतां मे सा निक्षेपतुला। स आह—भो! नास्ति सा त्वदीया तुला मूषिकैर्भक्षिता। जीर्णधन आह—भोः श्रेष्ठिन्! नास्ति दोषस्ते यदि मूषिकैः भक्षितेति। ईदृग् एवायं संसारः। न किंचिदत्र शाश्वतमस्ति, परमहं नद्यां स्नानार्थं गमिष्यामि तत् त्वमात्मीयं शिशुमेनं धनदेवनामानं मया सह स्नानोपकरणहस्तं प्रेषय इति। सोऽपि चौर्य्यभयात्तस्य शङ्कितः स्वपुत्रमुवाच—वत्स! पितृव्योऽयं तव स्नानार्थं नद्यां यास्यति तद्गम्यतामनेन सार्द्धं स्नानोपकरणमादाय इति। अहो! साधु चेदमुच्यते—

न भक्त्या कस्यचित् कोऽपि प्रियं प्रकुरुते नरः।
मुक्त्वा भयं प्रलोभं वा कार्यकारणमेव वा ॥३॥

तथा च—

अत्यादरो भवेद्यत्र कार्यकारण-वर्जितः।
तत्र शंका प्रकर्त्तव्या परिणामे सुखावहा ॥४॥

अथ असौ वणिक्शिशुः स्नानोपकरणमादाय प्रहृष्टमनास्तेन अभ्यागतेन सह प्रस्थितः। तथानुष्ठिते वणिक् स्नात्वा तं शिशुं नदीगुहायां प्रक्षिप्य तद्द्वारं बृहच्छिलया आच्छाद्य सत्वरं गृहमागतः पृष्टश्च तेन वणिजा—भो अभ्यागत! कथ्यतां कुत्र स मे शिशुर्यः

त्वया सह नदीं गतः इति। स आह—नदीतटात् स श्येनेन हृतः इति। श्रेष्ठ्याह—मिथ्यावादिन्! किं क्वचित् श्येनो बालं हर्तुं शक्नोति? तत् समर्पय मे सुतमन्यथा राजकुले निवेदयिष्यामि इति। स आह—भोः सत्यवादिन्! यथा श्येनो बालं न नयति तथा मूषिका अपि लोहभारघटितां तुलां न भक्षयन्ति, तत् अर्पय मे तुलां, यदि दारकेण प्रयोजनम्। एवं तौ विवदमानौ द्वावपि राजकुलं गतौ। तत्र श्रेष्ठी तारस्वरेण प्रोवाच—भो अब्रह्मण्यमब्रह्मण्यम्!! मम शिशुः अनेन चौरेण अपहृतः। अथ धर्माधिकारिणः तमूचुः—भोः! समर्प्यतां श्रेष्ठिसुतः। स आह—किं करोमि पश्यतो मे नदीतटात् श्येनेन अपहृतः शिशुः। तच्छ्रुत्वा ते प्रोचुः—भो! न सत्यमभिहितं भवता, किं श्येनः शिशुं हर्तुं समर्थो भवति? स आह—भो भो भोः! श्रूयतां मद्वचः—

तुलां लोहसहस्रस्य यत्र खादन्ति मूषिकाः।
†राजंस्तत्र हरेच्छ्येनो बालकं नात्र संशयः॥५॥

ते प्रोचुः—कथमेतत्? ततः श्रेष्ठी सभ्यानामग्रे आदितः सर्वं वृत्तान्तं निवेदयामास। ततः तैर्विहस्य द्वावपि तौ परस्परं संबोध्य तुलाशिशुप्रदानेन सन्तोषितौ॥

—पञ्चतन्त्रात्

---

पाठान्तर—†गजं तत्र हरेच्छ्येनो दारके कोऽस्ति विस्मयः।

प्रश्नाः

१—स्म इत्यस्य क्व प्रयोगो भवति ?

२—एषु पदेषु समासो नामतो निर्देश्यो विग्रहश्चापि प्रदर्श्यः—

प्रहृष्टमनाः, मिथ्यावादिन्, स्नानोपकरणम्, लोहभारघटिता ।।

३—निम्नलिखितेषु रेखाङ्कितेषु पदेषु विभक्तेरुपपादनं क्रियताम्—

क—तत्त्वमात्मीयं शिशुमेनं धनदेवनामानं मया सह स्नानोपकरण-हस्तं प्रेषय ।

ख—सोऽपि चौर्यभयात् तस्य शङ्कितः स्वपुत्रमुवाच ।

ग—यदि दारकेण प्रयोजनम् ।

## अष्टमः पाठः

# अभिज्ञानशाकुन्तलम् (क भागः)

(नेपथ्ये) मा खलु मा खलु चापलं कुरु। कथं गत एव आत्मनः प्रकृतिम् ।

राजा—(कर्णं दत्त्वा) अभूमिरियमविनयस्य, तत् को नु खल्वेवं निषिध्यते , (शब्दानुसारेणाऽवलोक्य सविस्मयम्) अये, को नु खल्वयम् अनुबध्यमानस्तापसीभ्याम् अबालसत्त्वो बालः ।

अर्ध-पीत-स्तनं मातुरामर्द-क्लिष्ट-केसरम् ।
प्रक्रीडितुं सिंहशिशुं बलात्कारेण कर्षति ।।१।।

(ततः प्रविशति यथा निर्दिष्ट-कर्मा तापसीभ्यां सह बालः)

जृम्भस्व, रे सिंह-शावक ! जृम्भस्व । दन्तान् ते गणयिष्यामि ।

प्रथमा—अविनीत ! किं नः अपत्य-निर्विशेषाणि सत्त्वानि विप्र करोषि । हन्त वर्धते ते संरम्भः । स्थाने खलु ऋषिजनेन सर्वदमन इति कृतनामधेयोऽसि ।

राजा—किं नु खलु बालेऽस्मिन् औरस इव पुत्रे स्निह्यति मे मनः । (विचिन्त्य) नूनमनपत्यता मां वत्सलयति ।

द्वितीया—एषा त्वां केसरिणी लङ्घयिष्यति यद्यस्याः पुत्रकं न मोक्ष्यसि ।

बालः—(सस्मितम्) अम्हहे, बलीयः खलु भीतोऽस्मि । (इत्यधरं दर्शयति)

राजा—(सविस्मयम्)

महतस्तेजसो बीजं बालोऽयं प्रतिभाति मे ।
स्फुलिङ्गाऽवस्थया वह्निरेधोऽपेक्ष इव स्थितः ॥२॥

प्रथमा—वत्स ! एनं मुञ्च बाल-मृगेन्द्रकम् । अपरं ते क्रीडनकं दास्यामि ।

बालः—कुत्र । देह्येतत् । (इति हस्तं प्रसारयति) ।

राजा—(बालस्य हस्तं दृष्ट्वा) कथं चक्रवर्ति-लक्षणमप्यनेन धार्यते । तथाह्यस्य—

प्रलोभ्य-वस्तु-प्रणय-प्रसारितो
विभाति जाल-ग्रथिताऽङ्गुलिः करः ।

अलक्ष्य-पत्रान्तरमिद्ध-रागया
नवोषसा भिन्नमिवैक-पङ्कजम् ॥३॥

द्वितीया—सुव्रते ! न शक्य एष वाचा-मात्रेण विरमयितुम् । तद् गच्छ । मदीये उटजे मार्कण्डेयस्य ऋषि-कुमारस्य वर्ण-चित्रितो मृत्तिका-मयूरकस्तिष्ठति तमस्योपहर ।

प्रथमा—तथा । (निष्क्रान्ता)

बालः—तावत् अनेनैव क्रीडिष्यामि । (इति तापसीं विलोक्य हसति)

राजा—स्पृहयामि खलु दुर्ललितायाऽस्मै । (निश्वस्य)

आलक्ष्य-दन्त-मुकुलाननिमित्त-हासै-
रव्यक्त-वर्ण-रमणीय-वचः प्रवृत्तीन् ।
अङ्काऽऽश्रय-प्रणयिनस्तनयान् वहन्तो
धन्यास्तदङ्ग-रजसा मलिनीभवन्ति ॥४॥

तापसी—(सांगुलीतर्जनम्) भो, न मां गणयसि । (पार्श्वमवलोक्य) कोऽत्र ऋषिकुमाराणाम् (राजानमवलोक्य) भद्रमुख ! एहि तावत् । मोचय अनेन दुर्मोच-हस्त-ग्रहेण डिम्भलीलया बाध्यमानं बाल-मृगेन्द्रकम् ।

राजा—तथा (इत्युपगम्य सस्मितम्) अयि भो महर्षि-पुत्रक !

एवमाश्रम-विरुद्ध-वृत्तिना
संयमी किमिति जन्मदस्त्वया ।
सत्त्व-संश्रयगुणोऽपि दूष्यते
कृष्ण-सर्प-शिशुनेव चन्दनः ॥५॥

तापसी—भद्रमुख ! न खल्वेष ऋषि-कुमारकः ।

राजा—आकार-सदृशं चेष्टितमेवास्य कथयति । स्थानप्रत्ययात्तु वयमेवंतर्किणः (यथाऽभ्यर्थितमनुतिष्ठन् बालकस्य स्पर्शमुपलभ्य स्वगतम्)—

अनेन कस्यापि कुलाऽङ्कुरेण
स्पृष्टस्य गात्रेषु सुखं ममैवम् ।
कां निर्वृतिं चेतसि तस्य कुर्याद्
यस्याऽयमङ्गात् कृतिनः प्ररूढः ॥६॥

### प्रश्नाः

१—निम्नलिखितानि वाक्यानि प्रकरणनिर्देशपुरस्सरं व्याख्यायन्ताम्—

क—नूनमनपत्यता मां वत्सलयति ।

ख—कथं चक्रवर्तिलक्षणमप्यनेन धार्यते ?

ग—आकारसदृशं चेष्टितमेवास्य कथयति ।

२—एषु वाक्येषु कारकप्रतिपादनं क्रियताम् ।

किंनु खलु बालेऽस्मिन् औरस इव पुत्रे स्निह्यति मनः, तमस्योपहर, स्पृहयामि खलु दुर्ललितायास्मै, बलात्कारेण कर्षति ।

३—उपमा कालिदासस्येत्युच्यते । एतस्य सत्यतामस्मात्पाठात्प्रतिपादय ।

४—दुष्यन्तेन राज्ञा कुतो ज्ञातं यद्बालेन सर्वदमनेन चक्रवर्तिलक्षणं धार्यते ।

५—अधोनिर्दिष्टेषु रेखाङ्कितेषु पदेषु किं नाम वैशिष्ट्यम् ? एषामभिप्रायं शब्दान्तरैः प्रतिपादय ।

क—अभूमिरियमविनयस्य ।

ख—एषा त्वां केसरिणी लङ्घयिष्यति यद्यस्याः पुत्रकं न मोक्ष्यसि ।

ग—मोचय अनेन दुर्मोचहस्तग्रहेण डिम्भलीलया बाध्यमानं बालमृगेन्द्रम् ।

६—एषु वाक्येषु उचितपददानेन रिक्तस्थानानि पूरय—

क—स्थाने खलु······सर्वदमन इति कृतनामधेयोऽसि ।

ख—अपरं ते·· ···दास्यामि ।

ग—मदीये··· · मार्कण्डेयस्य ऋषिकुमारस्य वर्णचित्रितो मृत्तिका-मयूरस्तिष्ठति ।

## नवमः पाठः

# अभिज्ञानशाकुन्तलम् (ख भागः)

**तापसी**—(उभौ निर्वर्ण्य) **आश्चर्यम् ! आश्चर्यम् ।**

**राजा—आर्ये ! किमिव ?**

**तापसी—अस्य बालकस्य असम्बन्धेऽपि भद्रमुखे रूपसंवादिनी ते आकृतिरिति विस्मितास्मि । अपि च वामशीलोऽपि भूत्वा अपरिचितस्यापि ते अप्रतिलोमः संवृत्तः ।**

**राजा**—(बालमुपलालयन्) **आर्ये ! न चेत् मुनिकुमारोऽयम्, तत् कोऽस्य व्यपदेशः ?**

**तापसी—पुरुवंशः ।**

राजा—(स्वगतम्) कथमेकान्वयो मम। अतः खलु मदनुकारिणमेनमत्रभवती मन्यते। (प्रकाशम्) अस्त्येतत् पौरवाणाम् अन्त्यं कुल-व्रतम्।

भवनेषु रसाऽधिकेषु पूर्वं
क्षिति-रक्षार्थमुशन्ति ये निवासम्।
नियतैक-यति-व्रतानि पश्चात्
तरु-मूलानि गृहीभवन्ति तेषाम् ॥१॥

न पुनरात्मगत्या मानुषाणामेष विषयः।

तापसी—यथा भद्रमुखो भणति अप्सरः सम्बन्धेन पुनरस्य बालस्य जननी इहैव देवगुरोः तपोवने प्रसूता।

राजा—(स्वगतम्) हन्त, द्वितीयमिदमाशा-जननम्। (प्रकाशम्) अथ सा तत्रभवती किमाख्यस्य राजर्षेः पत्नीः?

तापसी—कस्तस्य धर्म-दार-परित्यागिनो नाम सङ्कीर्तयितुं चिन्तयिष्यति।

राजा— (स्वगतम्) इयं खलु कथा मामेव लक्षीकरोति (विचिन्त्य) यदि तावदस्य शिशोर्मातरं नामतः पृच्छामि। अथवा अनार्यः खलु परदार-व्यवहारः।

(प्रविश्य मृण्मयूर-हस्ता)

तापसी—सर्वदमन, प्रेक्षस्व शकुन्त-लावण्यम्।

बालः—(सदृष्टिक्षेपम्) कुत्र वा मे माता? (उभे प्रहसतः)

प्रथमा—नाम-साहश्येन वञ्चितो मातृ-वत्सलः।

द्वितीया—वत्स, अस्य मृत्तिकामयूरस्य रम्यत्वं प्रेक्षस्व इति भणितोऽसि ।

राजा—(स्वगतम्) किं शकुन्तलेति अस्य मातुराख्या ? अथवा सन्ति पुनर्नामधेय-सादृश्यानि अपि नाम मृगतृष्णिकेव नाम-मात्रप्रस्तावो विषादाय कल्पते ।

बालः—अन्तिके, रोचते मे एष भद्रमयूरः । (क्रीडनकमादत्ते)

प्रथमा—(विलोक्य सोद्वेगम्)—अम्हहे, रक्षाकरण्डकम् अस्य मणि-बन्धे न दृश्यते ।

राजा—आर्ये ! अलमावेगेन । नन्विदमस्य सिंह-शावकस्य विमर्दात् परिभ्रष्टम् । (आदातुमिच्छति) ।

उभे—मा खलु, मा खलु एतदवलम्ब्य । कथं गृहीतमनेन ! विस्मयादुरो-निहित-हस्ते परस्परमवलोकयतः)

राजा—किमर्थं प्रतिषिद्धा स्मः ?

प्रथमा—शृणोतु महाराजः ! एषा महाप्रभावा अपराजिता नाम सुरमहौषधिः अस्य दारकस्य जातकर्म-समये भगवता मारीचेन दत्ता । एतां किल मातापितरौ आत्मानञ्च वर्ज-यित्वा अपरो भूमि-पतितां न गृह्णाति ।

राजा—अथ गृह्णाति ?

प्रथमा—ततस्तं सर्पो भूत्वा दशति ।

राजा—भवतीभ्यां कदाचिदस्याः प्रत्यक्षीकृता विक्रिया ?

उभे—अनेकशः ।

राजा—[ सहर्षमात्मगतम् ] तत् किमिदानीं संपूर्णमपि आत्मनो मनोरथं नाभिनन्दामि । [बालं परिष्वजते]

द्वितीया—सुव्रते ! एहि । इमं वृत्तान्तं नियम-व्यापृतायै शकुन्तलायै निवेदयावः । [निष्क्रान्ते]

## प्रश्नाः

१—एषां पदानामर्थान् निर्दिश—

रूपसंवादिनी, अप्रतिलोमः, व्यपदेशः, एकान्वयः, रक्षाकरण्डकम्, मणिबन्धः, उशन्ति ।

२—एतानि वाक्यानि प्रकरणनिर्देशपुरस्सरं व्याख्येयानि—

क—कस्तस्य धर्मदारपरित्यागिनो नाम सङ्कीर्तयितुं चिन्तयिष्यति ।

ख—अथवा अनार्यः खलु परदारव्यवहारः ।

ग—तत्किमिदानीं सम्पूर्णमपि आत्मनो मनोरथं नाभिनन्दामि ।

३—शकुन्तलावण्यमिति पदोच्चारणेन कथं वञ्चितो बालः सर्वदमनः ?

४—मृगतृष्णिका का भवति ?

क्षितिरक्षार्थम्, धर्मदारपरित्यागिनः, सदृष्टिक्षेपम्, उरोनिहितहस्ते ।

५—एषु रेखाङ्कितेषु विभक्तेरुपपादनं क्रियताम्—

क—अपि नाम मृगतृष्णिकेव नाममात्र-प्रस्तावो मे <u>विषादाय</u> कल्पते ।

ख—आर्ये ! अलम<u>ावेगेन</u> ।

ग—इमं वृत्तान्तं नियमव्यापृतायै <u>शकुन्तलायै</u> निवेदयावः ।

## दशमः पाठः

# भ्रातृप्रशस्तिः

पुरे प्राचि वाराणसीनाम्न्युदात्ते
भुवं शासति श्रीमति ब्रह्मदत्ते ।
मनुष्यास्त्रयो जङ्गले लाङ्गलेन
कृषन्ति स्म पृथ्वीमकृष्टामदुष्टाः ॥१॥

कदाचित् मुषित्वा जनान् राज-भीता
धनं तद्वनं दस्यवः सम्प्रविष्टाः ।
प्रयत्ने कृतेऽप्यप्रतीता गृहीता
न ते राजकीयैर्नृभिः प्रद्रवन्तः ॥२॥

उपेत्याटवीं तां ततो राजलोका
महीं कर्षतो नॄन् विलोक्येदमूचुः ।
अरे दस्यवो यूयमस्मान् प्रतार्य
कृषन्तोऽवनिं कर्षका सम्प्रजाताः ॥३॥

तदाऽतस्करत्वेऽपि तेषां त्रयाणा-
मभूद् दस्युसन्देह एवाविशेषात् ।
समाने वने हन्त काले समाने
कथं रक्षिणो नो जनाः संशयीरन् ॥४॥

सदोषोऽस्त्ययं दोषहीनोऽथवेति
प्रतीयेत संदिग्धहेतोः कथं नु ?

यतो वस्तुतस्तस्करास्तु प्रनष्टाः
स्थितास्ते त्रयस्तत्र दुष्टाः प्रदिष्टाः ॥५॥

विनैवापराधं त्रयस्ते मनुष्याः
गृहीतास्तथा संदिताः शृङ्खलायाम् ।
अनीयन्त पाटच्चरा अप्यसन्त-
स्तदा ब्रह्मदत्तान्तिकं राजलोकैः ॥६॥

इयत्यन्तरे काचिदागत्य योषा
समाच्छादनं दीयतामित्यवोचत् ।
भृशं रोदनं कुर्वती सातिदुःखात्
परिक्रामती स्माभितो भूपवेश्म ॥७॥

निशम्यादसीयं तमाक्रोशमुच्चै-
र्महीपस्तदा ब्रह्मदत्तोऽभ्यधत्त ।
इयं कामिनी याचते यत् तदच्छं
मुदाच्छादनं वस्त्रमस्यै प्रदत्त ॥८॥

तदानीं सभोपस्थितः कश्चिदूचे
नहीयं प्रभो ! वस्त्रमिच्छुर्ब्रवीति ।
इयं कामुका केवलं स्वस्य पत्यु-
र्नचेच्छास्ति कुत्रापि वस्त्रान्तरेऽस्याः ॥९॥

अथ ब्रह्मदत्तेन पृष्टा पुनः सा
पतिं वाञ्छसि त्वं किमाच्छादनं स्वम् ?

अवादीदसावेवमेवं हि देव !
स्वमाच्छादनं कामयेऽहं पति भोः ॥१०॥
ततः पृष्टवान् भूपतिर्ब्रह्मदत्त-
स्तदर्थं यथार्थं परीचिक्षिषुस्ताम् ।
इमे शृङ्खलाबन्धनं लम्भिता ये
मनुष्यास्त्रयः सन्ति के ते त्वदीयाः ॥११॥
त्वया वर्तते कोऽभिसम्बन्ध एषां
विजानासि कच्चिन्न वा त्रिष्वमीषु ।
इति स्पष्टमाख्येयमार्ये ऽनिवार्ये
विचार्ये च कार्ये भवेन्नैव दोषः ॥१२॥
तदाकर्ण्य कामिन्यसावाबभाषे
पतिभ्रातृपुत्रास्त्रयोऽमी भवन्ति ।
अमीषां ममैको मतो भ्रातृभूतोऽ
परो भर्तृभूतोऽपरः पुत्रभूतः ॥१३॥
मदीयोऽभिसम्बन्ध एषोऽत्र राजन् !
अमीभिः सहास्तीति सत्यं ब्रवीमि ।
अतः कारणादागताच्छादनेच्छुः
प्रदातुं भवानर्हतीत्याशयाऽहम् ॥१४॥
सहर्षं ततो भूपतिर्वाक्यमाख्यत्
प्रसीदामि ते वाचमाचम्य देवी !
त्वया सत्यमुक्तं यथेच्छं त्वमेकं

गृहाणैषु तुभ्यं प्रयच्छामि तुष्टः ॥१५॥
प्रदेया न सर्वे मयैते भवन्ति
गृहाणैकमेषु प्रसन्ने मयि त्वम् ।
इदं भूपवाक्यं निशम्यातिपट्वी
तदा साङ्गनेमां गिरं व्याजहार ॥१६॥
त्रयोऽमी प्रदातुं त्वया चेन्न शक्या-
स्ततः किं प्रकुर्यामहं मन्दभाग्या ।
यदि त्वं प्रसन्नोऽसि हे भूपते ! तन्
मदीयं प्रियं भ्रातरं सम्प्रयच्छ ॥१७॥
त्रयोऽमी प्रदातुं त्वया चेन्न शक्या-
स्ततः किं प्रकुर्यामहं मन्दभाग्या ।
यदि त्वं प्रसन्नोऽसि हे भूपते ! तन्
मदीयं प्रियं भ्रातरं सम्प्रयच्छ ॥१७॥
न वाञ्छाम्यहं कान्तमेकान्तकान्तं
न वा पुत्रमिच्छामि मत्प्रेमपात्रम् ।
प्रियं भ्रातरं सोदरं प्राप्य नित्यं
प्रसन्ना भविष्याम्यहं लब्धकामा ॥१८॥
महीपस्तु योषिद्वचस्तन्नियीय
प्रहृष्टस्तथा विस्मितः सन् न्यगादीत् ।
कथं भर्तृपुत्रौ विहाय त्वमेकं
प्रियं भ्रातरं केवलं वाञ्छसीति ॥१९॥

तयोक्तं यतो भर्तृपुत्रौ विलोके
सदा स्वार्थ-दोषाभिभूतौ हि लोके ।
परं भ्रातरः सर्वथा स्वार्थ-हीनाः
अतः सोदरं भ्रातरं कामयेऽहम् ॥२०॥

न मे भर्तृकाम्या न वा पुत्रकाम्या
तथास्ति प्रकृष्टा यथा भ्रातृकाम्या ।
अतो भ्रातृकाम्याम्यहं सानुरागा
सदा भ्रातृमत्येव सानन्दमासे ॥२१॥

सुता बान्धवा यत्र कुत्रापि लभ्याः
पतिर्वापि लोके परत्रापनीयः ।
परं पितृ-वंश-प्रदीपं महीप !
क्व नु प्राप्नुयां सोदरं भ्रातरं स्वम् ॥२२॥

क्व लभ्यस्त्रिलोक्यामपि भ्रातृरूपः
स्फुटं पुत्रदारेषु सत्स्वप्यमीषु ।
इमामुद्गिरन्तीं गिरं वीक्ष्य योषां
प्रहर्षप्रकर्षं ववर्षाशु भूपः ॥२३॥

प्रशंसन् मुहुस्तामथोवाच वाचं
त्वया सर्वथा सत्यमेवेदमुक्तम् ।
न लभ्यः क्वचिद् भ्रातृतुल्योजगत्याम्
प्रियं भ्रातृरूपं ततोऽहं विलोके ॥२४॥

अतो युक्तरूपास्ति ते भ्रातृकाम्या
निकामं त्वदीया मनीषापि रम्या ।
ध्रुवं वस्तुतत्त्वं समुद्बोधितोऽहं
प्रसन्नाननस्त्वत्प्रियं कर्तुमीहे ॥२५॥
सुतभ्रातृभर्तॄनतस्त्रीनपि त्वं
स्वसम्बन्धिनोऽमून् प्रसन्ना गृहाण ।
इति प्रोच्य कारागृहात् तान् मनुष्यांस्
तदोन्मुच्य तस्यै ददौ भूमिपालः ॥२६॥
—(सम्पादकस्य श्रीबोधिसत्त्वचरितात् महाकाव्यात्)

**प्रश्नाः**

१—अस्याः कथायाः सारं स्वकीयया संस्कृतगिराऽर्पय ।

२—पतिपुत्रभ्रातृषु किमिति तया स्त्रिया भ्रातुरेव प्राणा याचिताः ?

३—एषु पद्येषु किं छन्दः ? तस्य नाम लक्षणं च किम् ?

४—वाल्मीकिरामायणेऽपि भ्रातृमाहात्म्यविषयकं पद्यमेकमस्ति । किं तत् ?

५—निम्नलिखितानां पदानां व्याकरणदिशा व्याख्यानं क्रियताम्—
नूनम्, प्रनष्टाः सन्दिताः, अवोचत्, व्याजहार, आख्यत्, परीचिक्षिषुः, भ्रातृकाम्यामि ।

६—अधोनिर्दिष्टेषु पदेषु या या विभक्तयः प्रयुक्तास्तास्ताः किंहेतुकाः—
क—भुवं शासति श्रीमति ब्रह्मदत्ते ।
ख—परिक्रामति स्माभितो भूपवेश्म ।
ग—गृहाणैषु तुभ्यं प्रयच्छामि तुष्टः ।
घ—तस्यै ददौ भूमिपालः ।

७—"प्रहर्षप्रकर्षं ववर्षाशु भूपः" इत्यत्र कोऽलङ्कारः ?

## एकादशः पाठः

# व्रतपालनम्

बङ्गेषु नवद्वीपमण्डलान्तर्गते सुप्रथितनामधेये कृष्णनगरे इतो वर्षे प्रमथनाथो नाम कश्चिद् ब्राह्मणः स्वयमनिच्छन्नपि केवलं बहुतनयवियोगविधुरायाः सहधर्मिण्याः प्रियंवदाया निर्बन्धातिशयेन विवाहोचिते वयस्यवर्तमानेनापि निजात्मजेन चन्द्रनाथेन इन्दुमतीत्यभिधानायाः कस्याश्चिदष्टवर्षीयाः कन्यकायाः पाणिग्रहणमकारयत्। लब्धं यल्लब्धव्यम्, दृष्टं च यद् द्रष्टव्यमिति नववधूं विलोकयन्ती प्रियंवदा प्रकामं प्रमोदस्रोतस्विन्यां प्लवमानेव सानन्दं वर्षमेकमतिवाहितवती।

निदाघसमये दिधक्षन्निव भुवनमण्डलं दहनशलाकिकासमूहैरिव दुर्विषहैस्तीक्ष्णतरैः किरणकलापैः समुद्भासमानो मध्यमम्बरमधिरोहन् सहस्रकिरणः काञ्चिदभिनवामेव मूर्तिं दधाति। समग्रमपि भुवनं निष्प्राणमिव स्तिमितगम्भीरं कथं कथमिव प्रतिभाति। कानिचिद्दिनानि कृष्णनगरं सुविषमेण विषूचिकामयेनाक्रान्तमिति सर्वोऽपि नागरिकजनो भीतभीतो गृहमध्य एवावतिष्ठते। ते खलु नियतं पौरजनसंघातसम्मर्दसंकुलाः कृष्णनगरस्य पन्थानो जनशून्या निरुद्वेगं निद्राणा इव विद्यन्ते। अन्तरान्तरा भीतिविधुरहृदयानां शववाहकानां गद्गदकण्ठास्फुटो "हरिः हरि" रिति कातरो ध्वनिरुद्भवति। काकनिकराश्च शुष्कपादपशिरःसु

कर्णकटु रटन्तो भीतानपि पौरान् पुनरुक्तं भीषयन्ते। मारुतोऽपि च कथंकथमिव कठोरस्पर्शो जनानां शुष्कं हृदयं पुनरपि शोषयति। अस्मिन्नेव समये प्रमथनाथगेहाद् हाहाध्वनिरुदतिष्ठत्। चन्द्रनाथो विषूचिकयाक्रान्तः। प्रतिहता शक्तिश्चिकित्सकानाम्। प्रतिबद्धः प्रभावो मणिमन्त्रौषधीनाम्। पश्यत एव सर्वस्य चन्द्रनाथो विषमामवस्थामापन्नः। भस्मीभूतः सुखभोगः प्रियंवदायाः। गतश्चन्द्रनाथः स्वस्थानं सफलयितुमिव स्वं दैवलेखम्। पूर्णश्च कामः कुलिशकठोरस्य विधातृहतकस्य।

अहो इन्दुमति, अनाथासि, मुषितासि, हताशे! शून्यं जीर्णारण्यं खल्वयं ते जीवलोकः। चिराय हन्तास्तमितस्ते सुखादित्यः। साम्प्रतमन्धतमसाच्छन्नं ते जीवनम्। इयं दुःखवेदनैव तेऽद्यप्रभृति प्रियसहचरी। फलितमिदानीं दुर्दैवेन। अहो प्रसादवैमुख्यं देवानाम्। कष्टमतिदारुणो ग्रहकोपः। मृतश्चन्द्रनाथः। मूढे इन्दुमति! त्वमपि किं न मृतासि? अनात्मज्ञे! कथमिदानीं कठोरमतिकठोरं दुःखं सहेथाः?

अहो सुखमयं शैशवम्। सर्वथैवालौकिकीयं सृष्टिर्भगवतो विश्वसृजः। यत्र न दशाविपर्य्यासो लेशतोऽपि जनान् पीडयति यत्र च न द्वेषादयो हृदयमाक्रम्य जनान् पशूकर्तुं क्षमन्ते।

न जानातीन्दुमती स्मर्तुमपि शोच्यमात्मनोऽवस्थान्तरम्। न सा क्षणमप्यचिन्तयद् यद् दैवचौरो जीवनमपि तस्या हृदयाद-

चोरयदिति। न वा साऽवबोद्धुमचेष्टतापि यत् किं नु खल्वेते हाहाकारेण सोरस्ताडं रुदन्तीति। कथमिमे 'हा चन्द्रनाथ, हा इन्दुमति' इत्यसकृदाक्रुश्यानुशोचन्तीति ज्ञातुमसमर्थापीयं केवलं तेषां तादृशीमवस्थामवलोक्य तद्वदेव रोदितुमारभत।

क्षणेनैवेन्दुमत्याः सह भागधेयेन वेशोऽपि पर्यवर्तत। मृष्टः सीमन्तमूलादचिरारोपितो बिन्दुः सिन्दूरस्य। उन्मुक्तानि सह शङ्खायसवलयाभ्यां सर्वाण्यपि समुल्लसन्ति अचिरार्पितान्याभरणानि। दूरीकृतो रक्तपटः। परिधापितं तु नयनविषादावहमरक्तं वासः।

सा त्वनात्मज्ञा चिरवहनीयाद् दौर्भाग्यपिशुनाद् दुर्दर्शाद् अस्माद् वेशविपर्यासादपि नाबिभेत्, न च व्यषीदत्, न वा लेशतोऽप्यकम्पत।

प्रियंवदा तु 'हा चन्द्रनाथ, हा स्नेहसर्वस्व, हा मातृवत्सल, हा पुत्र', इति रात्रिन्दिवमाक्रन्दन्ती मूर्त्तिरिव कारुण्यस्य, दीनतरामवस्थां प्रतिपद्यमाना, मुहुर्मुहुर्विलपन्ती प्रतिपदिन्दुलेखेवातिक्षीणा कथंचिदुच्छ्वसिति।

नगर्यां विषूचिकायाः प्रकोप उत्तरोत्तरं प्रावर्द्धत। प्रतिगृहमेव स्वजनवियोगव्याकुलानां मर्मच्छेदोचितो हाहाध्वनिराकर्ण्यते। सर्वथा अवितथमिदं यद् विपद् विपदमनुबध्नातीति। हन्त ईदृशमपि दशाभोगं भुञ्जाने प्रमथनाथकुटुम्बेऽपरापि विपत्तिरुदपद्यत। कष्टम् इन्दुमत्यपि विषूचिकयाक्रान्ता। ज्ञात्वैवेदं सर्वे

परं व्यषीदन्। व्याधिर्वर्द्धितुमारभत। निमेषादेव द्वित्रा अगदङ्कारा: समायाता:। व्यवस्थापितं तैर्भेषजम्। परन्त्वहो कष्टम्, किं नाम तेन क्रियताम्? का खलु भेषजं पिबेत्? अभितो ध्वनिरुदतिष्ठत्— अद्य हि तिथिरेकादशी नाम। इन्दुमती च विधवा। न साद्य भेषजं पातुमर्हतीति। विषमावस्था। परिपृष्टै: पण्डितैस्तदेव प्रत्युक्तम्—न खलु धर्म्मशास्त्रमीदृशेष्वपि समयेषु विधवानां जलबिन्दुमात्रस्यापि पानं विदधातीति। ननु विषमोऽयमामय:। दुर्लभा ह्यनेनाक्रान्तानां प्राणा:। तत्र तदर्थं भेषजं पिबन्ती विधवाप्येषा दुष्येदिति। बहुश: प्रत्युक्तेऽपि कैश्चित् सहृदयै:, कस्तच्छृणुयात्? नहि नश्वराणां प्राणानां कृतेऽविनश्वरो धर्म: परित्यक्तुं शक्यते। रोगो द्विगुणमवर्द्धत। पिपासा च तां बलवद-बाधत। जलम्, जलम्, जलम्, इत्यसकृत् सकरुणं सविनयं च जलं याचमानस्तस्या: क्षीण: शुष्कश्च कण्ठ: शृण्वत्स्वपि पश्य-त्स्वपि च बहुषु न केनाप्यन्वकम्प्यत। न बिन्दुरपि सलिलस्य पातित: केनापि तस्या अधरोष्ठयो:। को नु जनस्तया तदर्थं नाभ्यर्थित:? न च क: करुणार्थिना तरलतरलेन लोचनयुगलेन निरीक्षित:? कोऽथवा उत्थित-पतितेनातिदुर्बलेन करपल्लवेन नाहूत:? अहो न तथापि व्यचलत् कस्यचिद् हृदयम्! नाल-भतेन्दुमती बिन्दुमपि जलस्य। न वा पायिता सा भेषजम्।

वत्से, सहस्व कथञ्चित् कांश्चित् क्षणान्। किं कुर्या:? निरी-क्षस्व भगवन्तं धर्म्मम्। समाह्वय देवं मधुसूदनम्। स ते सर्वां

बाधां निराकरिष्यति। वत्से विधवासि। कथमेकादश्यां जलं प्रार्थयसे ? तन्मैवं विक्लवा भूः। अचिरादेव गच्छति रात्रिः। तूर्णमेवोदयति देवो विभावसुः। प्रभूतं ते जलं दास्यामि। तन्नयने निमील्य तूष्णीमास्स्व। धर्म्मस्त्वां रक्षिष्यतीत्यादि विविधं प्रबोधवचनमन्तरा नान्यत् किंचित् तदानीमिन्दुमतीभार्य्यं तस्या उपहर्तुं प्राभवत्।

अहो प्रशस्यो धर्म्मरक्षणप्रकारः। नूनं तथा पतितां तामा-लोक्य ग्रावाऽपि भिद्येत, लौहमपि विलीयेत, वज्रमपि च शतधा विदीर्येत। न तु तत्रत्यैर्मनागपि विचलितम्। न विभाता विभा-वरी, न वा समुदितो भगवान् सहस्रकिरणः। इन्दुमती सुष्ठु खलु बान्धवानामुपदेश-वचनमनुसृतवती। निरीक्षितस्तया भगवान् धर्म्मः। आहूतो देवो मधुसूदनः। निमीलितं चिराय लोचनयुगलम्। अवलम्बितं च सुमहन्मौनम्। जलं जलमिति तु न पुनस्तया बान्धवो जन उद्वेजितः॥

(मित्रगोष्ठीपत्रिकातः)

**प्रश्नाः**

१—अस्याः कथायाः संक्षेपः स्वकीयया संस्कृतगिरा लिख्यताम्।

२—एषु पदेषु व्युत्पत्तिं दर्शय—दिघक्षन् अवतिष्ठते, भीषयन्ते, सोरस्ताडम्, आरभत, प्राभवत्, व्यचलन्, अविभेत्, व्यषीदत्।

३—निम्ननिर्दिष्टानां शब्दानामर्थं हिन्दी भाषायां लिख—

विषूचिका, आमयः, अगदङ्कारः, विभावसुः, कुलिशकठोरस्य, वासः।

४—अलौकिकी, पिबन्ती, अभिनवाम्—इत्येतेषां पुंसि रूपाणि लिख।

५—एषु वाच्यपरिवर्त्तनं क्रियताम्—

क—चन्द्रनाथो विषूचिकयाक्रान्तः।

ख—फलितमिदानीं दैवेन।

ग—व्यवस्थापितं तैर्भेषजम्।

६—"तस्याः क्षीणः शुष्कश्च कण्ठः शृण्वत्स्वपि च बहुषु"—अत्र सप्तमी कथम्?

७—अधोलिखितानां प्रातिपदिकानां सर्वासु विभक्तिषु रूपाणि लिख—

मूर्त्तिः, शिरस्, वासस् विपद्।

८—श्रुधातोर्लिङि रूपाणि देहि।

## द्वादशः पाठः

# श्रीराजेन्द्रो विजयताम्

देशस्याङ्ग्लवागुरासु पतितस्योन्मोचनार्थं पुरा
संग्रामे ह्यतिभीषणे हुतवतः सर्वं प्रियं पार्थिवम् ।
दिव्यं यस्य यशोऽनिशं प्रसरति त्यागात्मनः स व्रती
श्रद्धाभक्तिसनाथितो विजयतां राजेन्द्रनामा सुधीः ॥१॥
यश्चार्वीः परिषेवते प्रयतधीश्चर्याः सदा लौकिकी-
र्यस्य स्वं करणं परोपकरणं स्नेहश्च लोकोत्तरः ।
अर्थे यः परमात्मगाद्विमुखतां सोऽक्लिष्टकर्मा कृती
श्रद्धाभक्तिसनाथितो विजयतां राजेन्द्रनामा सुधीः ॥२॥
देवानां महनीयतामुपगतस्याप्यन्तिकाल्लब्धवान्
वात्सल्यं युगपूरुषस्य सुतरां श्रीगान्धिनो यो व्रती ।
प्राप्तो राष्ट्रपतेः पदं परतमं सोऽकृष्णकर्मा कृती
श्रद्धाभक्तिसनाथितो विजयतां राजेन्द्रनामा सुधीः ॥३॥
कृषकसखः श्रमिसेवी, पतिताधनचर्मकारसहकारी ।
हरिजन-विधवोद्धारी, जयति स चेतोहरो गुणैराढ्यः ॥४॥

(सम्पादककृता भारतीपत्रिकायां प्रकाशिता प्रशस्तिः)

### प्रश्नाः

१—एषां शब्दानामर्थान् लिख—

वागुरासु, करणम्, अक्लिष्टकर्मा, सुविश्रुतः ।

२—अधोलिखितेषु पदेषु समासनिर्देशपुरस्सरं विग्रहः प्रदर्श्यताम्—

आङ्गलवागुरासु, लोकोत्तरः, सौम्याकृतिः, कृषकसखः ।

३—श्रीराजेन्द्रप्रसादः कां पदवीमध्यास्ते ? अस्य महापुरुषस्य चरितं संक्षेपतो वर्णय ।

४—अधोलिखितेषु पदेषु प्रक्रियां स्पष्टीकुरु—

परिषेवते, अगात्, प्रथतेतमाम्, विजयताम् ।

५—जि धातोर्लटि लोटि च रूपाणि लिख ।

## त्रयोदशः पाठः

# भोज-प्रबन्धात्

ततः क्रमेण पञ्चशतानि विद्वांसः वररुचि-बाण-मयूर-रेफण-हरिशङ्कर-कलिङ्गकर्पूर-विनायक-मदन - विद्याविनोद - कोकिल-तारेन्द्रमुखाः सर्वशास्त्र-विचक्षणास्सर्वे सर्वज्ञाः श्रीभोजराजसभामलंचक्रुः । एवं स्थिते कदाचिद्विद्वद्वृन्दवन्दिते सिंहासनासीने कविशिरोमणौ कवित्वप्रिये विप्रप्रियबान्धवे भोजेश्वरे द्वारपाल एत्य प्रणम्य व्यजिज्ञपत्—देव, कोऽपि विद्वान्द्वारि तिष्ठति इति । अथ राजा 'प्रवेशयताम्' इत्याज्ञप्ते सोऽपि दक्षिणेन पाणिना

समुन्नतेन विराजमानः विप्रः प्राह—

'राजन्नभ्युदयोऽस्तु'—

राजा—'शंकरकवे, किं पत्रिकायामिदम्'।

कविः—पद्यम्—

राजा—कस्य ?—

कविः—तवैव भोजनृपतेः—

राजा—तत्पठ्यताम्—

कविः—पठ्यते।

एतासामरविन्दसुन्दरदृशां द्राक् चामरान्दोलना-
दुद्वेल्लद्भुजवल्लिकङ्कणझणत्कारः क्षणं वार्यताम् ॥१॥

यथा यथा भोजयशो विवर्धते
सितां त्रिलोकीमिव कर्तुमुद्यतम्।
तथा तथा मे हृदयं विदूयते
प्रियालकालीधवलत्वशङ्कया ॥२॥

ततो राजा शंकरकवये द्वादशलक्षं ददौ। सर्वे विद्वांसश्च विच्छायवदना बभूवुः परं कोऽपि राजभयान्नावदत्। राजा च कार्यवशाद्गृहं गतः।

ततो विभूपालां सभां दृष्ट्वा विबुधगणस्तं निनिन्द—अहो नृपतेरज्ञता। किमस्य सेवया ? वेदशास्त्रविचक्षणेभ्यः स्वाश्रित-कविभ्यो केवलं लक्षमेदात्। असौ च केवलं ग्राम्यः कविः शंकरः,

क्रिमस्य प्रागल्भ्यम् ? । इत्येवं कोलाहलरवे जाते कश्चिदभ्यागात्कनकमणिकुण्डलशाली दिव्यांशुकप्रावरणो नृपकुमार इव मृगमदपङ्कलङ्कितगात्रो नवकुसुमसमभ्यर्चितशिराः चन्दनाङ्गरागेण विलोभयन्, विलास इव मूर्तिमान्, कवितासार इव तनुमाश्रितः, शृङ्गाररसस्य निस्यन्द इव सस्वेदः महेन्द्र इव महीवलयं प्राप्तो विद्वान् । तं दृष्ट्वा सा विद्वत्परिषद् भ्रमकौतुकयोः पात्रमासीत् । स च सर्वान्प्रणिपत्य प्राह—कुत्र भोजनृपः इति । ते तमूचुः—इदानीमेव सौधान्तरं गतः इति । ततोऽसौ प्रत्येकं तेभ्यस्ताम्बूलं दत्त्वा गजेन्द्रकुलगतो मृगेन्द्र इवासीत् । ततः स महापुरुषः शङ्करकविप्रदानेन कुपितांस्तान्बुद्ध्वा प्राह—भवद्भिः शङ्करकवये द्वादशलक्षाणि प्रदत्तानीति न मन्तव्यम् । अभिप्रायस्तु राज्ञो नैव बुद्धः । यतः शङ्करपूजने प्रारब्धे शङ्करकविस्त्वेकेनैव लक्षेण पूजितः । किं तु तन्निष्ठांतन्नाम्ना विभ्राजितानेकादशरुद्राञ्छंकरानप्रत्यक्षान् ज्ञात्वा तेषां प्रत्येकमेकैकं लक्षं तस्मै शङ्करकवय एव शङ्करमूर्तये प्रदत्तमिति राज्ञोऽभिप्राय इति । सर्वेऽपि चमत्कृतास्तेन ।

ततः कोऽपि राजपुरुषस्तद्विद्वत्स्वरूपं राज्ञे निवेदयामास । राजा च स्वमभिप्रायं साक्षाद्विदितवन्तं तं महेशमिव महापुरुषं मन्यमानः सभामभ्यगात् । स च 'स्वस्ति' इत्याह राजानम् । राजा च तमालिङ्ग्य प्रणम्य निजकरकमलेन तत्करकमलसवलम्ब्य सौधान्तरं गत्वा प्रोत्तुङ्गगवाक्ष उपविष्टः प्राह—विप्र, भवन्नाम्ना

कान्यक्षराणि सौभाग्यावलम्बितानि । कस्य वा देशस्य भवद्विरहः सुजनान्बाधते इति । ततः कविर्लिखति राज्ञो हस्ते 'कालिदासः' इति । राजा वाचयित्वा पादयोः पतति ।

ततस्तत्रासीनयोः कालिदासभोजराजयोरासीत्संध्या । राजा 'सखे, संध्यां वर्णय' इत्यवादीत् ।

कालिदासः—

व्यसनिन इव विद्या क्षीयते पङ्कजश्री-
गुणिन इव विदेशे दैन्यमायान्ति भृङ्गाः ।
कुनृपतिरिव लोकं पीडयत्यन्धकारो
धनमिव कृपणस्य व्यर्थतामेति चक्षुः ॥३॥

पुनश्च राजानं स्तौति कविः—

उपचारः कर्तव्यो यावदनुत्पन्नसौहृदाः पुरुषाः ।
उत्पन्नसौहृदानामुपचारः कैतवं भवति ॥४॥
दत्ता तेन कविभ्यः पृथिवी सकलापि कनकसंपूर्णा ।
दिव्यां सुकाव्यरचनां क्रमं कवीनां च यो विजानाति ॥५॥
सुकवेः शब्दसौभाग्यं सत्कविर्वेत्ति नापरः ।
वन्ध्या नहि विजानाति परां दौहृदसंपदम् ॥६॥

इति । ततः क्रमेण भोजकालिदासयोः प्रीतिरजायत ।

प्रश्नाः

१—शङ्करकवये यद् द्वादशलक्षं भोजेन दत्तं तस्य का व्याख्या कालिदासेन कृता ? कथं कुपिताः पण्डिताः शमिताः ।

२—कालिदासकृतसन्ध्यावर्णनमाश्रित्य सन्ध्यां स्वकीयया संस्कृतगिरा वर्णय।

३—एषु पदेषु प्रक्रिया संक्षेपेण प्रदर्श्यताम्—

अलंचक्रुः वार्यताम्, व्यजिज्ञपत्, अभ्यगात्।

४—अधोनिर्दिष्टानां पदानां कोऽर्थः —

मृगमदः, ताम्बूलम्, स्वस्ति, गवाक्षः।

५—एषु समासेषु विग्रहा लिख्यन्ताम्—

सिंहासनासीने मणिकुण्डलशाली, नवकुसुमसमभ्यर्चितशिराः, भोज-कालिदासयोः।

६—एषु तिङ्वाच्यपरिवर्तनं कुरु—

क—पुनश्च राजानं स्तौति कविः।

ख—भवद्भिः शङ्करकवये द्वादशलक्षाणि दत्तानीति न मन्तव्यम्।

ग—राजा शङ्करकवये द्वादशलक्षं ददौ।

७—दा धातोर्जन् धातोश्च लोटि लङि च रूपाणि लिख।

## चतुर्दशः पाठः

# भरतस्य शपथाः

यदा भरतो मातुलगृहात्प्रत्यागतस्तदा स कौशल्यां द्रष्टुं गतः स्वमात्रा कैकेय्या रामवनप्रेषणादि यत्कुकर्म कृतमासीत्तत्स लेशतोऽपि नाजानात्।

तथापि स कौशल्यया 'अधुना तव निष्कण्टकं राज्यं सम्पन्नं यत्त्वमभिलषितवान्' इत्येवं बहुविधम् उपालब्धः। तदा स आत्मनो निर्दोषत्वं प्रमाणयितुं दारुणान् इमान् शपथान् शपते।

एवं विलपमानां तां प्राञ्जलिर्भरतस्तदा।
कौशल्यां प्रत्युवाचेदं शोकैर्बहुभिरावृताम् ॥१॥
आर्ये! कस्मादजानन्तं गर्हसे मामकल्मषम्।
विपुलां च मम प्रीतिं स्थिरां जानासि राघवे ॥२॥
कृतशास्त्रानुगा बुद्धिर्मा भूत्तस्य कदाचन।
सत्यसंधः सतां श्रेष्ठो यस्यार्योऽनुमते गतः ॥३॥
प्रैष्यं पापीयसां यातु सूर्यं च प्रति मेहतु।
हन्तु पादेन गां सुप्तां यस्यार्योऽनुमते गतः ॥४॥
कारयित्वा महत्कर्म भर्ता भृत्यमनर्थकम्।
अधर्मो योऽस्य सोऽस्यास्तु यस्यार्योऽनुमते गतः ॥५॥
बलिषड्भागमुद्धृत्य नृपस्यारक्षितुः प्रजाः।
अधर्मो योऽस्य सोऽस्यास्तु यस्यार्योऽनुमते गतः ॥६॥
उपदिष्टं सुसूक्ष्मार्थं शास्त्रं यत्नेन धीमता।
स नाशयतु दुष्टात्मा यस्यार्योऽनुमते गतः ॥७॥
गाश्च स्पृशतु पादेन गुरून् परिवदेत च।
मित्रे द्रुह्येत सोऽत्यर्थं यस्यार्योऽनुमते गतः ॥८॥
विश्वासात्कथितं किञ्चित्परिवादं मिथः क्वचित्।
विवृणोतु स दुष्टात्मा यस्यार्योऽनुमते गतः ॥९॥

पुत्रैर्दासैश्च भृत्यैश्च स्वगृहे परिवारितः ।
स एको मिष्टमश्नातु यस्यार्योऽनुमते गतः ॥१०॥

अप्राप्य सदृशान्दारानन‍पत्यः प्रमीयताम् ।
अनवाप्य क्रियां धर्म्यां यस्यार्योऽनुमते गतः ॥११॥

आत्मनः संततिं द्राक्षीत्स्वेषु दारेषु दुःखितः ।
आयुः समग्रमप्राप्य यस्यार्योऽनुमते गतः ॥१२॥

राजस्त्रीबालवृद्धानां वधे यत्पापमुच्यते ।
भृत्यत्यागे च यत्पापं तत्पापं प्रतिपद्यताम् ॥१३॥

संग्रामे समुपोढे च शत्रुपक्षभयङ्करे ।
पलायमानो वध्येत यस्यार्योऽनुमते गतः ॥१४॥

मद्यप्रसक्तो भवतु स्त्रीष्वक्षेषु च नित्यशः ।
कामक्रोधाभिभूतश्च यस्यार्योऽनुमते गतः ॥१५॥

मास्य धर्मे मनो भूयादधर्मं स निषेवताम् ।
अपात्रवर्षी भवतु यस्यार्योऽनुमते गतः ॥१६॥

संचितान्यस्य वित्तानि विविधानि सहस्रशः ।
दस्युभिर्विप्रलुप्यन्तां यस्यार्योऽनुमते गतः ॥१७॥

उभे संध्ये शयानस्य यत्पापं परिकल्प्यते ।
तच्च पापं भवेत्तस्य यस्यार्योऽनुमते गतः ॥१८॥

देवतानां पितॄणां च मातापित्रोस्तथैव च ।
मा स्म कार्षीत्स शुश्रूषां यस्यार्योऽनुमते गतः ॥१९॥

सतां लोकात्सतां कीर्त्याः सज्जुष्टात्कर्मणस्तथा ।
भ्रश्यतु क्षिप्रमद्यैव यस्यार्योऽनुमते गतः ॥२०॥
बहुभृत्यो दरिद्रश्च ज्वररोग-समन्वितः ।
स यायात्सततं क्लेशं यस्यार्योऽनुमते गतः ॥२१॥
आशामाशंसमानानां दीनानामूर्द्ध्व-चक्षुषाम् ।
अर्थिनां वितथां कुर्याद्यस्यार्योऽनुमते गतः ॥२२॥
मायया रमतां नित्यं पुरुषः पिशुनोऽशुचिः ।
राज्ञो भीतस्त्वधर्मात्मा यस्यार्योऽनुमते गतः ॥२३॥
ब्राह्मणायोद्यतां पूजां विहन्तु कलुषेन्द्रियः ।
बालवत्सां च गां दोग्धु यस्यार्योऽनुमते गतः ॥२४॥
तृषार्तं सति पानीये विप्रलम्भेन योजयन् ।
यत्पापं लभते तत्स्याद्यस्यार्योऽनुमते गतः ॥२५॥
भक्त्या विवदमानेषु मार्गमाश्रित्य पश्यतः ।
तेन पापेन युज्येत यस्यार्योऽनुमते गतः ॥२६॥

—रामायणस्यायोध्याकाण्डात्

## प्रश्नाः

१—एभ्यः पद्येभ्यो भारतीयसंस्कृतेः कीदृशं स्वरूपं ज्ञायते । तत्स्वकीयया संस्कृतगिरा वर्णय ।

२—'यस्यार्योऽनुमते गत' इत्यत्र पदपरिचयं कारय ।

३—'विवदमानेषु' इत्यत्र आत्मनेपदं कुतः ?

४—प्राञ्जलिः, अकल्मषम्, अरक्षितुः, अपात्रवर्षी, कलुषेन्द्रियः, बहुभृत्यः—
इत्यत्र के समासाः कथं च तेषां विग्रहाः ?

५—आर्यः, अपात्रवर्षी—इत्यत्र के प्रत्ययाः ?

६—एषु पदेषु प्रकृति-प्रत्ययप्रविभागं प्रदर्शय —
धर्म्याम्, त्यागः, आश्रित्य, पलायमानः, दोग्धुम् ।

७—द्राक्षीत्स्वेषु दारेषु दुःखितः—इत्यत्र अडभावः कुतः ?

८—वाल्मीकेः काव्यं तेऽभिरोचते न वा ? रोचते चेत्तत्र को हेतुः ?

## पञ्चदशः पाठः

# हरिस्वामि-कथा

एकदा कश्चन वेतालो नरशरीरगतः भिक्षवर्थमानीयमानो राज्ञः त्रिविक्रमसेनस्य स्कन्धगतस्तं प्राह—राजन् त्वं गतागतैः श्रान्त इव लक्ष्यसे । तव अध्वविनोदाय कथमिमां कथयामि तां शृणु ।

अस्त्युज्जयिनी नाम लोकप्रसिद्धा नगरी । तत्र पुण्यसेनो नाम राजा राज्यं करोति स्म । तस्य अतीव प्रियो भक्तश्च हरिस्वामीति नामा अमात्यो बभूव । कालक्रमेण तस्य अनुरूपायां भार्यायां देवस्वामीति नामा पुत्रः सोमप्रभेति नाम्नी गुणगणालंकृता अन्वर्थाभिधाना कन्या च समुदपद्यत । यदा सा प्राप्तो-

षोडशवर्षाऽभूत् तदाऽतीव सुन्दरी बभूव । पिता च तस्याः विवाह-विषये चिन्तितो बभूव । सा च स्वनिश्चयं पितरं मातरं भ्रातरञ्चैवमाविष्कृतवती यदहं कस्मैचन ज्ञानिने विज्ञानिने शूराय वा प्रदातव्येति ।

एकदा हरिस्वामी राज्ञा पुण्यसेनेन केनापि दाक्षिणात्येन राज्ञा सह सन्धिविग्रहार्थं प्रेषितः । तत्र पर्यवसितकृत्यः स केनापि श्रुततद्दुहितृरूपसम्पदा ब्राह्मणकुमारेण संगतः । तेन तद्दुहितरं याचितः स्वकन्यायाः प्रतिज्ञां श्रावयामास, पप्रच्छ च । ज्ञानि-विज्ञानि-शूरेषु को भवानिति । तेनोक्तं विज्ञानीति । स्वस्य सत्यतां प्रमाणयितुं विज्ञानिना रथ एको निर्मितस्तत्र हरिस्वामिनमारोप्य स स्वर्गादींल्लोकान् दर्शयामास । अन्ते च दाक्षिणात्यस्य नृपतेः कटके तं मुमोच । ततः प्रसन्नेन हरिस्वामिना स्वदुहिता तस्मै प्रति-श्रुता । लग्नं विचार्य ततः सप्तमेऽहनि तस्या विवाहोऽपि निश्चितः ।

एतस्मिन्नन्तरे उज्जयिन्यामेव कश्चिद् ब्राह्मणयुवा देवस्वामिनं तत्स्वसारं सोमप्रभामयाचत । तेन च तत्प्रतिज्ञां श्रावयित्वा पृष्टं ज्ञानिविज्ञानिशूरेषु कस्त्वमिति ? तेन च उक्तं शूरोऽहमिति । स्ववचसः सत्यतां प्रमाणयितुं तेनास्त्रशस्त्रेषु स्वकीयमनितरसाधारणं कौशलमपि प्रदर्शितम् । ततस्तुष्टेन देवस्वामिना स्वभगिनी तस्मै प्रतिश्रुता । ततः सप्तमेऽहनि विवाहोऽपि निश्चितः ।

एवमेव कश्चिद् ब्राह्मणकुमारः सोमप्रभामातरमुपेतस्तया च तत्प्रतिज्ञां श्रावित आत्मानं ज्ञानिनमाह । स्वकीयेन अतीतानागत-

परिज्ञानेन च तां भूयः परितोषयामास। परितुष्टा च सा तस्मै स्वकीयां दुहितरं प्रतिश्रुतवती। ततः सप्तमेऽहनि विवाहं चापि निर्धारितवती।

एवं सति यदा हरिस्वामी दक्षिणदेशात्प्रतिनिवृत्तस्तदा तेन सोमप्रभाविवाहार्थं यन्निश्चितं तत्स्वपत्न्यै पुत्राय च निवेदितम्। साऽपि सोऽपि च स्वं स्वं कृतं तस्मै निवेदयामासतुः। ततश्च सप्तमेऽहनि वरत्रयनिमन्त्रणेन व्याकुलोऽभूत् हरिस्वामी। परन्तु किं क्रियेत? कोऽभ्युपायः? एवं चिन्तातुरोऽसौ षड् दिवसानतिवाहितवान्। सप्तमे दिवसे च ते ज्ञानि-विज्ञानिशूराख्योऽपि वरा हरिस्वामिगृहमुपेताः। तत्कारणात् एव चिन्ताचान्ते हरिस्वामिनि अन्यद् बलीयः चिन्ताकारणं प्रादुरभूत्। सोमप्रभा न क्वाप्यदृश्यत। कुत्र गता सेति न ज्ञायते। एवं च तेन पृष्टो ज्ञानी उवाच यत्सा धूम्रशिखाख्येन रक्षसा स्ववसतिं विन्ध्याटवीं नीतेति। ततो विज्ञानी सर्वोपकरणयुतं रथं निर्माय तत्र हरिस्वामिनं ज्ञानिशूरौ चारोप्य ज्ञानिना कथितां विन्ध्याटवीमनयत्। तत्र च ज्ञातवृत्तान्तनिर्गतेन रक्षसा शूरस्य राम-रावणयोरिवाश्चर्यकरः संगरः समजनि। तस्मिंश्च तुमुले संग्रामदुर्मदस्यापि तस्य रक्षसोऽर्धचन्द्रेण बाणेन शिरोऽच्छिनत्। ततश्च सोमप्रभामादाय ते सर्वेऽपि विज्ञानिरथेन हरिस्वामिगृहं प्रत्यावृत्ताः। तत्रागतेषु च तेषु महान् विवादः समुदपद्यत। ज्ञानी अवदत्—यदि अहं ज्ञानबलेन न कथयेयं कुत्र सोमप्रभेति तर्हि कथं सा लब्धुं शक्या? विज्ञानी अवदत्–यत् यदि

अहं सर्वोपकरणयुतं व्योमचारिणं रथं न अरचयिष्यं तर्हि कथं देवानामिव भवतां गतागतं समभविष्यत्। शूरश्च प्राह—यदि अहं राक्षसं न अहनिष्यम् तर्हि कथं सोमप्रभा लब्धुं शक्येत, तन्म-ह्यमेव कन्येयं दातव्येति। एवं चोद्भूते तेषां मिथो विवादे न किंचिदपि निश्चेतुं पारयन् हरिस्वामी मौनमेवाश्रयत्।

एवं कथां संश्राव्य वेतालो राजानं पप्रच्छ—राजन्! त्वं मे वद ज्ञानि-विज्ञानि-शूरेषु कस्मै सा कन्या दातव्येति? यदि न प्रतिवक्ष्यसि मूर्धा ते शतधा विदलिष्यतीति। राजा एतच्छ्रुत्वा प्राह—"यत्सा शूरायैव दातव्या। स हि प्राणपणेन तं राक्षसं हत्वा तामानयत्। ज्ञानिविज्ञानिनौ तु धात्रा कर्मकरौ विहितौ यथा गणकतक्षाणौ। एतच्छ्रुत्वा वेतालः पुनः राज्ञः स्कन्धात् स्वस्थानमुपेतः। राजा च पुनस्तमानेतुं प्रस्थितः।

—कथासरित्सागरे वेतालपञ्चविंशतितः

### प्रश्नाः

१—वेतालस्य कः प्रश्नः, राज्ञश्च किमुत्तरम्?

२—सोमप्रभा केन नीताऽभूत् कथं च पुनर्लब्धा?

३—कथामेतां हिन्दीभाषयाऽनुवद।

४—अधोलिखितेषु पदेषु समासो विग्रहश्च प्रदर्शनीयौ:—

अ—तद्दुहितृरूपसम्पदा, ज्ञातवृत्तान्तनिर्गतेन, संग्राममदुर्मदस्य।

५—गृहपति, पितृ, रक्षस्—

एषां प्रातिपदिकानां द्वितीयायां चतुर्थ्यां पञ्चम्यां च रूपाणि लिख ।

६—वेतालः को भवति ?

७—विदलिष्यति, अच्छिनत्, कौशलम्, प्रत्यावृत्ताः—एषां पदानां पदान्तराणि समानार्थकानि लिख ।

## षोडशः पाठः

# कविः कालिदासः

कवयः क्रान्तदर्शना इति पूर्वे सूरयः । सत्यं कविर्न केवलं व्युत्पत्तिमान् भवति प्रतिभानवानपि । तथापि प्रतिभा यथा कवित्वे कारणं न तथा व्युत्पत्तिः । प्रातिभेन चक्षुषा पश्यन्ति कवयो विदूरं च व्यवहितं च । नहि तेषां किञ्चित्तिरस्कृतं नाम । इन्द्रस्य विमानेन विहायसं गतो दुष्यन्तो देवकार्यं समाप्य यदा तेनैव वाहनेन भुवमवतरीतुं प्रक्रमते तदाऽधःस्थितो मर्त्यलोकोऽस्याश्चर्यदर्शनो भवति । विस्मयेन स एवं वर्णयत्यवतरणक्रियां स्वाम्—

शैलानामवरोहतीव शिखरादुन्मज्जतां मेदिनी
पर्णाभ्यन्तरलीनतां विजहति स्कन्धोदयात् पादपाः ।
सन्तानास्तनुभावनष्टसलिला व्यक्तिं भजन्त्यापगाः
केनाप्युत्क्षिपतेव पश्य भुवनं मत्पार्श्वमानीयते ।।

विमानेन गगनं विगाहमानस्य दूरं गतस्य जनस्यैवं भाति यत् शैलाः स्वमुच्चैस्त्वं विहाय मेदिन्या एकरूपतां गता इति। ततोऽवतरणेन संनिकृष्यमाणा भूः शैलानां शिखरेभ्योऽवरोहतीति जायते प्रतीतिः। शैलाश्चोन्मज्जन्त इव भुवः। उन्मज्जनं नाम अमीषां पृथिव्याः पृथक्त्वेन स्थितिः। इदं चापरं तदानीं दृश्यं भवति। पूर्वं पलाशिनः पलाशप्रचयतिरोहितात्मान एव दृश्यन्ते, सम्प्रति तेषां स्कन्धा अपीति स्वरूपाविष्कारस्तेषाम्। एवं नद्योऽपि वैदूर्यकृततनूभावेन अदृश्यमानजलौघाः सम्प्रति सामीप्ये सति सन्तायमाना इव स्पष्टं भासन्ते। इदमिह वर्णनायां विमर्ष्टव्यं भवति—नहि कालिदासस्य विमानेन दिव आरोहणं शक्यक्रियं सम्भाव्यं वाऽस्ति। वर्णना चैषा तथा स्फुटा यथा केनापि साम्प्रतिकेन विमानस्थेन समर्थेन जनेन शक्या प्रमाणयितुम्। अहो! अपूर्वा कापि प्रेक्षा कवेर्ययोपपन्नोऽयमत्यन्तमदृष्टमपि दुरासदमप्यर्थं समुत्प्रेक्षितुमलम्, अविकलं च यथातथं संनिधापयितुम्।

उपमा कालिदासस्येति प्रथते प्रवादः। कालिदासस्य उपमा यथा काव्यशरीरशोभामुत्कर्षन्ति तथा नेतरत्किञ्चित्। आस्वाद्यतां तावदियमुपमा कालिदासीया—

मन्दः कवियशःप्रार्थी गमिष्याम्युपहास्यताम्।
प्रांशुलभ्ये फले लोभादुद्बाहुरिव वामनः॥

महाकविरपि, कविकुलकैरवसुधाकरोऽपि, कालिदास आत्मानं

मन्दं मूढं मन्यते । इदं मे बालिश्यं यदहं मूढोऽपि कवियशः प्रार्थये, कविरिति प्रथितः स्यामिति च कामये । ध्रुवमेवमाचरन् लोके उपहास्यतां यास्यामि । यथा वामनः कश्चित् प्रांशुना प्रलम्बबर्ष्मणा लभ्ये फले वृक्षस्थे गृध्यति, तद् आदातुं स्वल्पां स्वां भुजामुन्नमयति, न च प्रभवति तत् स्प्रष्टुमपि, कुत एव पुनर्ग्रहीतुम् । एवं चेष्टमानं तमवलोक्य बाढं हसति जन आत्मनोऽनीशानः । दुर्निरोधश्च तत्र हासः । अहो ! वैचित्र्यमुपमायास्तत्कृतार्थविशदतायाश्च ।

न केवलमेकामेवोपमां कदाचन स्वपद्येषु उपनिबध्नाति अपितु कालिदास उपमापरम्परां मालोपमेत्यभिधानामप्युपस्थापयति । तत्र स्थालीपुलाकन्यायेन इयं मालोपमा उपस्थाप्यते—

निधानगर्भामिव सगराम्बरां
शमीमिवाभ्यन्तरलीनपावकाम् ।
नदीमिवान्तःसलिलां सरस्वतीं
नृपः ससत्त्वां महिषीममन्यत ॥

महाकवेः कालिदासस्य काव्यमतीवोत्कृष्टं रमणीयं हृदयहारि च वर्तते । अत एव कविकुलगुरुरिति नाम्ना व्यपदिश्यते । तस्य उपमा, प्रकृतिवर्णनं, भाषासौष्ठवं च सर्वथा हृदयं हरन्ति सहृदयानाम् । अतः सुष्ठूच्यते तद्विषये—

पुरा कवीनां गणनाप्रसङ्गे
कनिष्ठिकाधिष्ठित-कालिदासा ।

अद्यापि तत्तुल्यकवेरभावा-
दनामिकाऽन्वर्थवती बभूव ।।

महाकविना कालिदासेन अभिज्ञानशाकुन्तल-मालविकाग्नि-मित्र-विक्रमोर्वशीयाभिधानि त्रीणि नाटकानि, रघुवंशम् कुमार-सम्भवम् इति द्वे महाकाव्ये, मेघदूतमिति गीतिकाव्यम्, ऋतु-संहारमिति खण्डकाव्यमित्येतावन्तो ग्रन्थाः सुप्रणीताः । तेषु चाऽभिज्ञानशाकुन्तलमेव सर्वोत्कृष्टमिति पुरातना आलोचकाः । एवं हि त आहुः —

काव्येषु नाटकं रम्यं तत्र रम्या शकुन्तला ।

—भारत्यां पत्रिकायां प्रकाशितात्
निबन्धात् किञ्चिदृजूकृत्य गृहीताः सन्दर्भाः ।

### प्रश्नाः

१—उपमा कालिदासस्येति विषयमवलम्ब्य नातिदीर्घः प्रबन्धः स्वकीयया संस्कृतगिरा विरच्यताम् ।

२—कालिदासेन के के ग्रन्थाः प्रणीताः ?

३—कालिदासस्य गौरवं किंहेतुकम् ?

४—अधोलिखितानां व्युत्पत्तिः स्पष्टीक्रियताम्—

व्युत्पत्तिः, विजहति, विहाय, विमर्ष्टव्यम्, साम्प्रतिकेन, स्प्रष्टुम्, अमन्यत ।

५—मालोपमाया उदाहरणं देहि ।

६—आश्चर्यदर्शनः, स्वरूपाविष्कारः, कविर्यशः प्रार्थी, उद्बाहुः ।

७—आत्मनोऽनीशान इत्यत्र षष्ठी कुतः ?

८—स्थालीपुलाकन्यायं स्पष्टीकुरु ।

### सप्तदशः पाठः

## पौरव-दिग्विजयः (क भागः)

(भारतभूमिभागस्य वायव्य-महाद्वारे यवनदण्डनायको अलिकसुन्दरः दिग्विजयमुद्दिश्य आगतः । देशस्यान्तस्तु सुवास्तुनगर्यां पौरवो वितस्ता-तीरस्थजनपदस्य गणनायकः तक्षशिलाया राज्ञा आम्भिना सह मन्त्रयमाणः स्थितः)

आम्भिः—न तावन्मन्ये सुकरमिदं, महाराज ! अमी यवना अजय्या एव । अल्पसंख्याका अपि सुसज्जिताः । पदातयोऽप्रतिहतपराक्रमाः । अश्वारूढाः सर्वेऽपि महाशूराः, इतरे तु अलिरथमहारथाः । एतेषां दण्डनायको अलिकसुन्दरस्तु देवेन्द्र इव समर्थः । नैव जानाति स पराजयम् । अतोऽहं मन्ये, महाराज ! तैः सह विग्रहोऽनुचित इति ।

पौरवः—आम्भिराज ! किमहं शृणोमि त्वन्मुखादेतानि वचांसि ?

ते चेद्यवनाः तथा बलिष्ठाः किं वयं दुर्बलाः ? किं न जानासि तेषां पक्षे एकोऽपि नास्ति गज इति ? क्रुद्धश्चेद्गजः कुत्र पदातयः, के वाऽश्वाः ? वयं तु गजसमृद्धाः किं च सुसज्जिता अपि ते अल्पसंख्याका एव। न ते पारयन्ति जेतुमस्मान् असंख्याकान्। संप्राप्ते समरे तु तान् यवनान् परावर्तयितुं निःसंशयं शक्नुमः।

आम्भिः—महाराज ! न जानासि तेषां बलम्। शस्त्रक्रियायां संग्रामविद्यायां च सुशिक्षितास्ते भटाः, सर्वे चतुराः, अजय्या यमभटा इव। अस्माकं पदातिसेना तु गवां गोष्ठीव असम्भाविता अशिक्षिता, स्वैरशीला च। गजः क्रुद्धश्चेन्महाराज ! किं स जानाति 'इमे स्वपक्षीयाः, इमे शत्रवः' इति ? सर्वान् अपि हन्यात्। क्रोधे विवेकस्य का वार्ता ? किं बहुना महाराज ! सर्वथा वयमसमर्थाः तान् अभियोक्तुम् यथा यथा विचारयामि तथा तथा सन्धिं विना नान्यमुपायमुत्पश्यामि विपत्तिमेतामुत्तरीतुम्।

पौरवः—किमिदं, आम्भिराज ! ईदृशमधीरं तव हृदयम् ! भवेदपि बलिष्ठः शत्रुः, किं शरणागतिः क्षात्रधर्मः ? न न कदाप्यहं न समरार्थमागतेन शत्रुणा सह सन्धानं चिन्तयामि। मा ते भूदत्र संशयः। श्रुता किं त्वया कदापि सिंहस्य जम्बुकवृत्तिः ? राज्ञः पराक्रमो न चेत् किमित्यस्मान्मानयन्ति महाजनाः ? यदि कश्चिद्यवनः स्थितेष्वस्मासु अस्मज्जन्मभूमि-

मेतामाक्रम्य राज्यं कर्तुमारभेत, किं न वयं नीताः स्याम अपहासस्य आस्पदतां लोके ? प्राप्ते तु दास्ये, आम्भिराज ! कथं तिष्ठेत् धर्मः ? नष्टे धर्मे हन्त किं जीवितेन ? क्षत्रियाः किल धर्मरक्षकाः। धर्मस्य च रक्षणार्थं तद्द्वारा जनस्य च तुष्ट्यर्थं ते महीं शासति। आर्यान् जनान् अन्यदेशीयानां शृंखलायां योक्तुं नार्हा वयम्।

आम्भिः—सत्यं, महाराज, यदुक्तं भवता। जानाम्यहमपि क्षात्र-धर्मम्, अद्य तु अपूर्वा परिस्थितिः। क्षात्रधर्मः सर्वथा निरर्थको भवत्यत्र। सर्वनाशोऽपि भवितेति मन्ये। युक्तं किमार्यान् जनान् मृत्युमुखे क्षेप्तुम् ?

पौरवः—मा एवं भण आम्भिराज ! जयापजयौ विधिना नियतौ। नात्र कार्या पुरुषेण विचारणा। क्षात्रधर्मः सनातनः, सार्वका-लिकः, न परिस्थितितन्त्रः। यदि दैवात् पराभवो भवेन्नः, मरणमेव वरं तदा। न पराजितः परतन्त्रो जीवितुमर्हति क्षत्रियः। कथमिदानीं, आम्भिराज ! तवापि ईदृशी चित्त-विकलता प्रस्तुता ? किं न श्रुतं त्वया—गतवासरे पुष्करा-वतीं प्रविशता अलिकसुन्दरेण दृष्टः कश्चिद्ब्राह्मणो मार्गागतः, "इहागच्छ" इत्याहूतश्च। ब्राह्मणस्तु तत्रैव स्थितः "यदि मया सार्धं संलपितुमिच्छसि तर्हि त्वमेव इहागच्छ" इति प्रत्युवाच। तेन क्रुद्धो यवनराजः कोशात् कृपाणमाकृष्य "अरे, जानासि किं कोऽहमस्मीति ? इति पप्रच्छ। ब्राह्मणस्तु

स्मित्वा—"जानामि सुष्ठु त्वां मम स्वातन्त्र्यमपहर्तुमागतं चौरम्" इति निरुद्विग्नोऽवदत् । नितान्तं क्रुद्धः अलिकसुन्दरस्स दन्तान् कटकटायमानो "अरे दुर्विनीत ! पश्येदम्" इति गर्जन् असिं तस्य पुरतोऽनर्तयत् । ब्राह्मणः उच्चैर्विहस्य—"अरे वीर ! अतिसाहसीव दृश्यसे । छिन्धि मम विहासं तव असिना यदि शक्तोऽसि, पश्यामि ते बलम् !" इत्युवाच ।

आम्भिः—ब्राह्मणास्तु विचित्राः पुरुषाः, महाराज ! नाभिनन्दन्ति ते जीवितं वा मरणं वा । किं न त एव कारणभूताः श्रीनगर्यां सम्भूतस्य जनहत्याकाण्डस्य ? कुभाप्रान्ते सर्वान् पर्वतवासिनः प्रेर्य यवनैः सह समरे योजयित्वा तैः सह स्वयमपि हता हतभाग्या ब्राह्मणा एव । अत्र परत्र च, महाराज ! तेषां करणीयं नास्ति । वयं तु महीशासकाः, जनजीवनपालकाः । महाराज ! सर्वजनहितसाधना दृष्टिरावश्यका नः । शुभाशुभविवेकोऽपि क्षात्रधर्मः ।

पौरवः—अहो यवनानां पादेषु स्वदेशसमर्पणं विवेकं मन्यसे आम्भिराज ! तव विवेकस्त्वय्येव तिष्ठतु । महाजनानां स्वातन्त्र्यरक्षणार्थमेवाहं नियुक्तः । सैव मम पवित्रतमा दीक्षा । कदाप्यहं जीवन्न व्रतभ्रष्टो भवेयम् ।

प्रश्नाः

१—सार्वकालिकः, क्षात्रधर्मः, स्वातन्त्र्यम्—एषु प्रत्येकं तद्धितप्रत्यय उच्यताम् ।

२—अधोनिर्दिष्टेषु पदेषु प्रक्रियां संक्षिप्ताम् उपस्थापय—

अजय्याः, आकृष्य, अनर्तयत्, क्षेप्तुम्, शासति, छिन्धि ।

३—पौरवस्य आम्भिना सह यो वार्तालापोऽभूत्तं स्वकीयया संस्कृतवाचा लिख ।

४—एषां शब्दानामर्थं हिन्दीभाषायां लिख—

दुर्विनीत, अप्रतिहत-पराक्रमिणः, विग्रहः ।

५—नाटकस्य किं लक्षणम् ?

६—एतानि वाक्यानि प्रकरणनिर्देशपुरस्सरं व्याख्येयानि—

आम्भिराज ! ईदृगधीरं तव हृदयम् ।

ख—ब्राह्मणास्तु विचित्राः पुरुषा महाराज ।

ग—सैव मम पवित्रतमा दीक्षा ।

७—निम्ननिर्दिष्टेषु पदेषु समासो निर्देश्यो विग्रहश्चापि प्रदर्श्यः—अप्रतिहतपराक्रमिणः, अतिरथमहारथाः, सर्वजनहितसाधनाः, हत्याकाण्डस्य, स्वातन्त्र्यरक्षणार्थम् ।

## अष्टादशः पाठः

# पौरव-दिग्विजयः (ख भागः)

(पौरव आसनादुत्थाय इतस्ततः चिन्ताक्रान्तो विचरति । तस्य मुखे उद्वेगः, प्रतिष्ठा, अचला च प्रतिज्ञा चित्रिता । तत आम्भिरुत्थाय गन्तुमारभते । द्वारगते च तस्मिन् आम्भी पौरवः क्रुद्धशार्दूल इव परावृत्य गर्जति)

**पौरवः—दुर्बल ! पौरवसिंहस्य पुरत आगत्य शरणागतिं मन्त्रयन् न लज्जसे ?**

**आम्भिः—**(द्वारि स्थितः) **महाराज ! तत्र कोऽपराधः ? यत्स्वशक्त्या न साध्यं तद्युक्त्या एव साधयितव्यम् । किं बलिष्ठोऽहमिति मत्वा यः कोऽपि शिरः शिलया घट्टयति ?**

(ततः प्रविशति अकलंकपुर्या गणनायको हाराणः पौरवं द्रष्टुम् । प्रस्थास्यमानम् आम्भिं दृष्ट्वा)

**हाराणः—**(आत्मगतम्) **अहो आम्भिराजः । अयमत्रैव तिष्ठति** (प्रकाशम्) **भो आम्भिराज ! दिष्ट्या लब्धो भवान् । केयं त्वरा ? प्रष्टव्यं किञ्चिदस्ति । तिष्ठतु भवान् ।**

(आम्भिः पुनरागत्य तिष्ठति पौरवो हाराणश्चापि )

**हाराणः—आम्भिराज ! गतेऽहनि भारद्वाज-माणवकस्य वार्तामिकामश्रौषम् ।……न जाने तत्र कियान् सत्यांश इति……।**

**आम्भिः—प्रकाशय वार्तां, हाराणचन्द्र !**

हाराणः—(आम्भेर्मुखं विलोकयन्) यवनेन अलिकसुन्दरेण सह गुप्त-सन्धाने प्रवृत्तोऽसि त्वमिति ।

आम्भिः—(भूमौ निविष्टदृष्टिः) आम् ! तत्र कोऽपराधः ?

पौरवः—सहसा उत्थाय कोपाग्नितप्तनेत्रः आम्भिं प्रति (बद्धमुष्टिः) कोऽपराधः । अरे रे जम्बुक !

आम्भिः—(ईषद्विहस्य) महाराज ! यत्र सिंहोऽप्यसमर्थः तत्र युक्ति-चतुरो जम्बुक एव समर्थः । (हाराणं प्रति) आम्, हाराणचन्द्र अहमलिकसुन्दरस्य मैत्रीं साधयितुं प्रवृत्तः । अन्यथा सर्वनाशः अनिवार्य एव । यदि मां मन्यसे स्वजनघातकं तर्हि नाहमे-काकी । प्रागेव उपस्थाननगर्याः शशिगुप्तः धवलवत्याः गुणभद्रः मेरुदर्शिपुरस्य मधुरकः, अन्ये च बहवो दण्डनायकाः अलिक-सुन्दरस्य सुहृद्वर्गं प्रविष्टाः ।

पौरवः—(सरोषम्) निर्लज्जाः श्वानः ।

आम्भिः—आम्, आं महाराज ! सिंह इव मत्स्यकानां राजा अश्वकः अलिकसुन्दरेण अयुध्यत । परिणामश्च विदित एव । दुर्गसमभेद्यं सुभद्रमवर्णानां दुर्गव्यूहं अनायासेन भित्त्वा तत्र-स्थानां वीरशतानां प्राणान् कोऽन्यो जुहुयात् ? धूर्ता दाक्षिणा-त्या वणिजः द्विसहस्रबला अपि अर्धरात्रे तं हन्तुमुद्युक्ताः तेनैव हताः किल ? युद्धविशारदो बली हस्तिनगर्या नायकः प्रथमं तमनाहत्य, बहुधा संतप्य पश्चात् तमेव शरणमगात् ।

महाराज ! न जानासि महाराज ! अलिकसुन्दरस्य सामर्थ्यम्। स हि विरुद्धानाममर्षणः, अपकर्तॄणां प्रतिकर्ता, मित्राणां तु परममित्रम् ।

पौरवः—अरे जम्बुक ! अस्मान् संहर्तुमेव समागतेन शत्रुणा सह मैत्री कथं वा क्रियेत ? तन्मैत्री नाम शरणागतिरेव। त्वत्सदृशा निराशा भारतधरित्रीभारभूताः । उच्छिष्टेन उदरम्भरिः श्वेव तमनुसृत्य आत्मानं विक्रीय आगतः किं वा प्रलपसि ? यदि मृत्युरेव यवनसेनानीर्भूत्वा आगच्छेत् तदापि नाहं समराद्बिभेमि ।...अपेहि, मूर्ख ।

हाराणः—समाश्वसितु महाराजः । उद्वेगेनालम् । (आम्भिं प्रति) आम्भिराज ! अलिकसुन्दर इदानीं कुत्र स्थितः ?

आम्भिः—(उत्थाय) हाराणचन्द्र ! इत आरभ्य सप्तमे दिवसे स्वसेनासमेतः स सिन्धुं तीर्त्वा तक्षशिलां प्रवेक्ष्यति । तत्र तमहमुचितरीत्या सभाजयित्वा तस्य भूयः समादरार्थं संभावितजनसमंशनं कल्पयिष्यामि । तदर्थमेव पौरवसिंहमेनमामन्त्रयितुमागतः । वक्तव्यमुक्तम्, गच्छाम्यहमिदानीम् । अस्य मौर्ख्यमेवैनमत्स्यति ।

(गच्छति)

प्रश्नाः

१—प्रस्थास्यमान आम्भिः किमर्थं प्रत्यावृत्तः ? किं तस्य पौरवसकाशागमने प्रयोजनमासीत् ?

—अधोनिर्दिष्टेषु पदेषु समासविशेषनिर्देशपुरस्सरं विग्रहाः प्रदर्शनीयाः—

बद्धमुष्टिः, सत्यांशः, अनादृत्य, त्वत्सदृशः, भारतधरित्रीभारभूताः।

—निम्नलिखितेषु पदेषु प्रक्रिया स्पष्टीक्रियताम्—

अश्रौषम्, अनिवार्यः, अमर्षणः, तीर्त्वा, उदरम्भरिः, अपेहि, कल्पयिष्यामि।

—एतानि वाक्यानि प्रकरणनिर्देशपुरस्सरं व्याख्येयानि—

महाराज! यत्र सिंहोऽप्यसमर्थः तत्र युक्तिचतुरो जम्बुक एव समर्थः।

ख—स हि विरुद्धानाममर्षणः अपकर्तॄणां प्रतिकर्ता, मित्राणां तु परममित्रम्।

ग—अस्य मौर्ख्यमेवैनमत्स्यति।

—अधोरेखाङ्कितेषु या विभक्तयः प्रयुज्यन्ते तासामौचित्यं सम्यक् प्रदर्श्यम्—

क—शत्रुणा सह मैत्री कथं वा क्रियेत।

ख—उद्वेगेनालम्।

ग—यदि मृत्युरेव यवनसेनानीर्भूत्वा आगच्छेत्तदापि नाहं समराद्बिभेमि।

## एकोनविंशः पाठः

# पौरवदिग्विजयः (ग भाग)

पौरवः—(जातरोषः) अरे क्षुद्र! त्वमभ्यागतः मम निवास उपस्थितः। अतएव प्राणैर्न वियुक्तः (हाराणं प्रति) हाराणचन्द्र, सुष्ठु जानाम्यहम् अलिकसुन्दरो वीर इति। परन्तु

अस्मद्देशीया वीराः श्वान इव तस्य पुच्छं गृहीत्वा तमनुसरेयुरिति नाचिन्तयम् । किमेतत्सत्यं यद् आम्भिनोक्तम्" ?

हाराणः—सत्यं महाराज ! नास्त्यत्रासत्यगन्धोऽपि अस्मद्देशीया राजानो बहवो यवनपक्षं प्रविष्टाः । किं बहुना ? तव आप्तमित्रमभिसरपुत्रोऽपि अलिकसुन्दरस्य सकाशं दूतमेकं प्रेषितवानिति श्रुतं मया ।

पौरवः—(सहसोत्थाय) किं किमभिसरपुत्रः ?

हाराणः—आम् महाराज ! राजानस्तावदेवम्, महाजनास्तु अस्मद्देशीया यवनान् रोद्धुमुद्युक्ताः । अलिकसुन्दरस्यानुवर्तिनं शशिगुप्तं कुभाया नद्यास्तीरे दृष्ट्वा काचिद् ग्रामवासिनी युवतिः तस्योपरि गोमयं प्रक्षिप्य 'अरे ग्रामसिंह ! अपि यवनानां पाद-धूली ते रोचते ?' इति पप्रच्छ । ईषदपि न बिभ्यति तेभ्यो यवनेभ्योऽस्मज्जनाः, महाराज ! ब्राह्मणा अपि सर्वथा जनानामुत्साहावेशमुत्पाद्य, तान् समरसन्नद्धान् कृत्वा यवनानां विरोधे पराक्रमन्ते । अस्मद्गणनायकानाम् ईदृक् स्थैर्यं यद्यभविष्यत्, महाराज, प्रागेव यवना स्वदेशं पलायिष्यन्त । राज्यस्य च रक्षणार्थं नियुक्तनायकेभ्य एव अस्मज्जन्मभूमिर्दास्यं प्राप्नोतीव ।

पौरवः—कथं न तथा भवेत्, हाराणचन्द्र ! यदा दरिद्रजातका जम्बुका अपि राजानो भवन्ति ? दुर्दैवमिदमस्माकम् । इमे मन्दभाग्याः भीरवः निखिलजनस्तोमस्य भाग्यविधातारः ।

किमेतेषां मन्त्रिणो मृताः ? किमर्थं तूष्णीं तिष्ठन्ति ते नराधमाः ? अथवा तेऽपि शुनकशरीरोपजीविनः कीटाः ! भ्रष्टाः ! भ्रष्टाः ! आगतस्य चौरस्य तुष्ट्यर्थं स्वगृहं निर्दग्धुमुद्यक्ता इमे राजनीतिकुशलाः ! मां च विवेकं बोधयितुमागत आम्भिः !

हाराणचन्द्र ! यद्भावि तद् भवत्येव । अस्माकमभीप्सितं स्पष्टं खलु । वहुजनहितं साधनीयं क्षत्रियेण । यवनानामागतिः सर्वेषाम् असम्मता । ते सर्वथा समुत्सारणीयाः । पुरुषकारोऽवश्यं कर्तव्य एव । ततः परं विधिः प्रमाणम् ।

हाराणः—सुष्ठु भणितं, महाराज ! क्षात्रधर्मोऽपि दीक्षास्वरूपः । जनानां सुखमेव नो व्रतम् । अलिकसुन्दरस्य पराभवे एव जनाः सुखिनः ततस्स एव कार्योऽस्माभिः, यद्यपि यवनापेक्षया वयं दुर्बलाः । अलिकसुन्दरस्तु समरे असमः । प्रायशो वयं संग्रामे विजिताः स्याम, तथापि अस्माभिरवश्यम् योद्धव्यमेव । राष्ट्रस्य हिताय मनुष्यसाध्यं सर्वं कार्यमेव । अतः परं दैवायत्तम् ।

पौरवः—(सहर्षं हाराणमाश्लिष्य) साधु हाराणचन्द्र ! अनुरूपमेतदभिहितम् । विधाता अस्मज्जन्ममेदिनीं यवनतन्त्रां कर्तुमिच्छति चेत्, करोतु तथैव । परंतु वयं न यावज्जीवं यवनतन्त्रा भवितुमिच्छामः । युधि धैर्यं प्रदर्श्य परलोकमेव गच्छामः । 'तुच्छा भारतदेशीया अधीराः क्षत्रपुत्राः' इति

लोके परिवादः तावन्मा भूत्। यवनानां बलं सर्वथा निवर्तयिष्यामः। जयो वा भवत्यपजयो वा। स्वधर्मे निधनं श्रेयः किल। सेनापतिर्विजयगुप्तो विशिष्टं बलमायोज्य सिद्धोऽस्ति। गन्धवनात् त्रीणि शतानि महागजा अद्यैव समानीताः। तेषां समरशिक्षा देया। अशिक्षितानामपि तेषां सार्थमुपयुक्तं भविष्यति। वितस्तातीरवासिनो युवजनान् सर्वान् आमन्त्र्य सेनापि व्यतन्यत, युद्धकाले एव शस्त्राभ्यासः। किं कुर्मः? समुदाय एव बलम्। अन्येऽपि यवनपक्षप्रवेशमनिच्छन्तो गणनायका यथेष्टम् अस्मान् समागच्छन्तु।

हाराणः—क्षेमगर्भपुर्याः सुदासः कमलश्रीगणनायको दर्शकः वितस्तवत्या राजा रूपकः, श्रेणिकाया गणनायकः पण्डितः, मन्दवाहिनीनगरनायकः, सुमेरुपुरीनायकः, सिन्धुमतीभूपालः गुप्तको राजा, एते चान्ये च शूरा राजपुत्राः यवनान् प्रतिरोद्धुमुत्सुकाः।

पौरवः—साधु हाराणचन्द्र, तान् प्रति अद्यैव दूतान् प्रेषयामि। त्वमपि सन्नद्धो भव। महान् भवति संग्रामः सुदुष्कर इति मे भाति। अयं च समरो दैवं प्रत्येव भवेत्। भवतु भवतु! पुरुषकार एव नो धर्मः। दिग्विजयाय सन्नद्धा भवाम। विजयश्च इह वा परत्र वा भवत्येव। यद्यपि जिता वयं, धर्मो जयत्येव।

—श्री एस० के० रामचन्द्रराव-विरचितं संस्कृत-पत्रिकायां प्रकाशितम् आधुनिकम् एकाङ्कं नाटकम्।

## प्रश्नाः

१—अधोनिर्दिष्टेषु वाक्येषु सन्धिच्छेदः क्रियताम्—

क—नास्त्यत्रासत्यगन्धोऽपि ।

ख—अपि यवनानां पादधूली रोचते ।

ग—अस्मद्गणनायकानामीदृग्धैर्यं यद्यभविष्यत् ।

२—'पलायिष्यन्त' इति कस्य धातोः रूपम् ।

३—मित्रशब्दस्य किं लिंगम् ? एतत्स्ववाक्ये प्रयुङ्क्ष्व ।

४—एषां शब्दानां हिन्दीभाषायामर्थं लिख—

अभ्यागतः गोमयम्, पुरुषकारः, समरम् ।

५—पौरवस्य हारास्य च वार्तालापं स्वकीयया संस्कृतगिरा लिखत ।

६—अधोलिखितेषु शब्देषु संक्षिप्तां व्याकणप्रक्रियां प्रदर्शय—

पप्रच्छ, अचिन्त्यम्, रोद्धुम्, व्यतन्यत, योद्धव्यम्, निर्दग्धुम् ।

विंशः पाठः

# रामायणे वर्षर्तुवर्णनम्

स तदा वालिनं हत्वा सुग्रीवमभिषिच्य च।
वसन् माल्यवतः पृष्ठे रामो लक्ष्मणमब्रवीत् ॥१॥

अयं स कालः सम्प्राप्तः समयोऽद्य जलागमः।
सम्पश्य त्वं नभो मेघैः संवृतं गिरिसन्निभैः ॥२॥

एषा घर्मपरिक्लिष्टा नव-वारिपरिप्लुता।
सीतेव शोकसन्तप्ता मही वाष्पं विमुञ्चति ॥३॥

एष फुल्लार्जुनः शैलः केतकैरभिवासितः।
सुग्रीव इव शान्ताधिर्धाराभिरभिषिच्यते ॥४॥

रजः प्रशान्तं सहिमोऽद्य वायु-
र्निदाघदोषप्रसराः प्रशान्ताः।
स्थिता हि यात्रा वसुधाधिपानां
प्रवासिनो यान्ति नराः स्वदेशान् ॥५॥

क्वचित्प्रकाशं क्वचिदप्रकाशं
नभः प्रकीर्णाम्बुधरं विभाति।
क्वचित्क्वचित्पर्वतसन्निरुद्धं
रूपं यथा शान्तमहार्णवस्य ॥६॥

रसाकुलं षट्पदसन्निकाशं
प्रभुज्यते जम्बुफलं प्रकामम् ।
अनेकवर्णं पवनावधूतं
भूमौ पतत्याम्रफलं विपक्वम् ॥७॥

समुद्वहन्तः सलिलातिभारं
बलाकिनो वारिधरा नदन्तः ।
महत्सु शृङ्गेषु महीधराणां
विश्रम्य विश्रम्य पुनः प्रयान्ति ॥८॥

वहन्ति वर्षन्ति नदन्ति भान्ति
ध्यायन्ति नृत्यन्ति समाश्वसन्ति ।
नद्यो घना मत्तगजा वनान्ताः
प्रियाविहीनाः शिखिनः प्लवङ्गाः ॥९॥

क्वचित्प्रगीता इव षट्पदौघैः
क्वचित्प्रनृत्ता इव नीलकण्ठैः ।
क्वचित्प्रमत्ता इव वारणेन्द्रै-
र्विभान्त्यनेकाश्रयिणो वनान्ताः ॥१०॥

नीलेषु नीला नववारिपूर्णा
मेघेषु मेघा प्रतिभान्ति सक्ताः ।
दवाग्नि-दग्धेषु दवाग्निदग्धाः
शैलेषु शैला इव बद्धमूलाः ॥११॥

स्वनैर्घनानां प्लवगाः प्रबुद्धा
विहाय निद्रां चिरसंनिरुद्धाम् ।
अनेकरूपाकृतिवर्णनादा
नवाम्बुधाराभिहता नदन्ति ॥१२॥

मुक्तासमाभं सलिलं पतद्वै
सुनिर्मलं पत्रपुटेषु लग्नम् ।
हृष्ट्वा विवर्णच्छदना विहङ्गाः
सुरेन्द्रदत्तं तृषिताः पिबन्ति ॥१३॥

प्रहर्षिताः केतकिपुष्पगन्ध-
माघ्राय मत्ता वननिर्झरेषु ।
प्रपातशब्दाकुलिता गजेन्द्राः
सार्धं मयूरैः समदा नदन्ति ॥१४॥

नवाम्बुधाराहत - केसराणि
ध्रुवं परिष्वज्य सरोरुहाणि ।
कदम्ब-पुष्पाणि सकेसराणि
नवानि हृष्ट्वा भ्रमराः पिबन्ति ॥१५॥

मत्ता गजेन्द्रा मुदिता गवेन्द्रा
वनेषु विक्रान्ततरा मृगेन्द्राः ।
रम्या नगेन्द्रा निभृता नरेन्द्राः
प्रक्रीडितो वारिधरैः सुरेन्द्रः ॥१६॥

वर्षप्रवेगा विपुलाः पतन्ति
प्रवान्ति वाताः समुदीर्णवेगाः।
प्रनष्टकूलाः प्रवहन्ति शीघ्रं
नद्यो जलं विप्रतिपन्नमार्गाः ॥१७॥

नरैर्नरेन्द्रा इव पर्वतेन्द्राः
सुरेन्द्रनीतैः पवनोपनीतैः।
घनाम्बुकुम्भैरभिषिच्यमाना
रूपं श्रियं स्वामिव दर्शयन्ति ॥१८॥

घनोपगूढं गगनं न तारा
न भास्करो दर्शनमभ्युपैति।
नवैर्जलौघैर्धरणी वितृप्ता
तमोविलिप्ता न दिशः प्रकाशाः ॥१९॥

महान्ति कूटानि महीधराणां
धाराविधौतान्यधिकं विभान्ति।
महाप्रमाणैर्विपुलैः प्रपातै-
र्मुक्तकलापैरिव लम्बमानैः ॥२०॥

विलीयमानैर्विहगैर्निमीलद्भिश्च पङ्कजैः।
विकसन्त्या च मालत्या गतोऽस्तं ज्ञायते रविः ॥२१॥
वृत्ता यात्रा नरेन्द्राणां सेना पथ्येव वर्तते।
वैराणि चैव मार्गाश्च सलिलेन समीकृताः ॥२२॥

### प्रश्नाः

१—स्वकीयया संस्कृतगिरा वर्षर्तुं वर्णय ।

२—निम्ननिर्दिष्टेषु पदेषु सन्धिविच्छेदं प्रदर्श्य सन्धिनियमान् स्पष्टीकुरु—

पतत्याम्रफलम्, गजेन्द्राः, गवेन्द्राः, पथ्येव ।

३—अधोलिखितानां पदानां परिचयं कारय—

अभिषिच्यते, विपक्वम्, परिष्वज्य, तृषिताः, अभ्युपैति, समीकृता ।

४—निम्नलिखितेषु पदेषु समासनिर्देशपुरस्सरं विग्रहः प्रदर्श्यताम्—

गिरिसन्निभैः। शान्तारिः, पवनावधूतम्, बद्धमूलाः, मुक्तासमाभम्, विप्रतिपन्नमार्गाः नववारिपूर्णाः ।

५—नवमे वहन्ति वर्षन्तीत्यादिपद्ये कोऽलंकारः ?

## एकविंशः पाठः

# दिवास्वप्नस्य फलम्

कश्चिद् ब्राह्मणसूनुर्विद्याप्रसंगेन कालं नयति स्म। तस्य कस्मिंश्चिद्वणिग्गृहे नैत्यकं वर्तते । स च यदा तत्र न भंक्ते तदा सक्तुसेतिकां लभते । तां चावासं नीत्वा घटे प्रक्षिप्य स्थापयति । एवं च तस्य बहुना कालेन स घटः सक्तुभिः संपूर्णः । कदाचित्तस्य घटस्य नागदन्तके स्थापितस्याधस्ताच्छयनगतोऽसौ ब्राह्मणो दिवासुप्तप्रतिबुद्धः । एवं च चिन्तयामास महार्घं धान्यं वर्तते । किन्तु

कृतान्नं सक्तवः। तन्मे विंशतिमात्रकाणां रूप्यकाणां सक्तवः सन्ति। तांश्चाहं विक्रीय च्छगलिका विंशतिमात्रा उपावर्तयिष्यामि। षण्मासाञ्च प्रसविष्यन्ते, पञ्चाब्दानन्तराच्च चतुःशतसंख्या बह्वयो भविष्यन्ति। लोके च श्रूयते चतसृभिरजाभिरेका धेनुस्तरुणी जीववत्सा च बहुक्षीरा लभ्यते। सोऽहं ताभिरजाभिरेव गवां शतं परिवर्तयिष्यामि। सर्वं च गोशतात्संभवतीति तदुत्पन्नदान्तैः सर्वबीजवपनं करिष्यामि। ततः सर्वधान्यस्य महान्निचयो भविष्यति। शोभनं च वेश्म प्राकाराभ्यन्तर्हितं करिष्यामि। दासीदास-बहलां च मम महतीं संपदं दृष्ट्वावश्यं कश्चिद् ब्राह्मणः सुरूपां कन्यां दास्यति। तस्यां च दीर्घायुषमरोगं वंशधरं दारकं जनयिष्यामि। तस्य चाहं यथाविधि जातकर्मादि कृत्वा सोमशर्मेति नाम करिष्यामि। वल्गति च दारके ब्राह्मणी कर्मासक्ता गवामभ्यागमनकाले प्रमादाद्दारकं नाभिरक्षयिष्यतीति तामहं ब्राह्मणीं पुत्रस्नेहाभिभूतहृदयो लगुडेन ताडयिष्यामि। ततस्तेनासावेवमभ्याहतो घटः, येन तस्यैवोपरि शतकपालो व्याविद्धसक्तुर्निपतितः। अथासौ ब्राह्मणः स्वप्नरूपमिव तदन्यदचिन्तयत्। किमिदमिति परं वैलक्ष्यं जनहासं च गतः।

—तन्त्राख्यायिकातः

प्रश्नाः

१—अस्मात् पाठाद् य उपदेशो लभ्यते तं संक्षेपेण लिख ।

२—एषां शब्दानामर्थान् दत्त—
नैत्यकम्, सक्तुसेतिकाम्, नागदन्तके, निचयः, वल्गति, व्याविद्धसक्तुः, वैलक्ष्यम् ।

३—निम्ननिर्दिष्टानां धातूनां लटि रूपाणि प्रदर्शय—
वृत्, श्रु, दा, ताड्, जन् ।

४—कृतान्नमित्यस्य कोऽर्थः ?

५—अनयोः पदयोः समासो विगृह्यताम्—
दिवासुप्तप्रतिबुद्धः दीर्घायुपम् ।

## द्वाविंशः पाठः

# महाराजोऽशोकः

भरतभुवि को नामैतादृशो जनो यो महाराजस्याशोकस्य नाम न जानाति । स हि धर्मराजधार्मिकचक्रवर्ती तथा प्रायतत यथा सर्वस्यापि जनस्य धर्मे बुद्धिरभूत् । धर्ममेव स बहु मेने । प्राह च सः—अहो भेरीघोषोऽहो धर्मघोष इति । यत्र पूर्वं भेरीघोषोऽभूत्तत्र सम्प्रति धर्मघोषः श्रूयत इति तस्याशयः । तस्य प्रयासः सर्वथा फलेग्रहिर्जात इति नात्र कस्यापि विसंवादः ।

ख्रिस्तजन्मनः तृतीयायां शताब्द्यां सुगृहीतनामधेयस्य महा-राजस्यास्य जनिरजनीति इतिहासविदः, पूर्वमयमतीव साहसिको युद्धप्रियश्चासीत्। स्वसाम्राज्यवृद्ध्यर्थमुद्युञ्जानोऽसौ कलिंगानरौत्सीत्। तत्र च स्वातन्त्र्यप्रियैः कलिंगैः सह तस्य तुमुले संगरे हि परःसहस्राः कलिंगवास्तव्या निहताः, ततोऽप्यधिकतराश्च कारासु निक्षिप्ताः। एतादृशं भीषणं लोमहर्षणं दृश्यमवलोक्य ऋजुहृदयोऽसौ सम्राट् भृशमन्वतप्यत। सांग्रामिके विजये च तस्य विरक्तिरभूत्। ततः मनः शान्तिमाप्तुं स बुद्धं शरणं गतः। धर्म-विजये च स आत्मानं व्यापारयामास। सर्वभूत-हिते रतोऽसौ धर्म-विजयमेव कामयामास न तु विजयान्तरम् भूतानामविंहिसैव तस्य बहुमताभूत्।

तेन हि सम्राजा जनेषु धर्माभिरुचि-प्रवर्धनाय स्थाने स्थाने शिलासु स्तम्भेषु च लेखा लेखापिताः। तेन ते राजमार्गेषु स्थापिता येन तैर्मार्गैर्यान्त आयान्तो वा जनाः अनायासेनैव तानवगन्तुं पारयेयुः, तदुपदेशप्रेरितबुद्धयश्च धर्ममाचरेयुरिति। एवमेव धर्ममहामात्रा इति नाम्ना विशिष्टाधिकृता अपि नियुक्ता ये जनान् धर्ममुपादिशन्। अन्ये च राजूकयुतेत्यादयोऽधिकृता अपि धर्म-प्रचारार्थमादिष्टाः।

अथ को नाम स धर्मो यस्य परिवृद्ध्यर्थं स महाराज एव-मुदयुंक्तेति जिज्ञासात्र स्वाभाविकी। अशोक एकस्मिन्नभिलेखे

स्वयमेव पृच्छति कोऽयं धर्म इति । स्वयमेव च प्रतिवक्ति—दया, दानम्, सत्यम्, शुचिता, साधुता, मार्दवम् इत्येतावानेव धर्म इति ।

अशोको यशो वा कीर्ति वा न बह्वमन्यत । सर्वलोकहितमेव तु बह्वमन्यत । तदर्थं च सदा उद्योगपर आस्त । तस्य धर्मोऽसहिष्णुतापरो नासीत् । ब्राह्मणा वा श्रमणा वा तेन सममेवापूज्यन्त । एवं हि स आह—मम विजिते सर्वपाषण्डा (संप्रदायाः) वसेयुः । न केवलमिदमेव स स्वकीयाः प्रजा उपदिशति, बहुश्रुता भवतेति अपितु परधर्मनिन्दात आत्मधर्मप्रशंसातश्च ता निवारयति । सर्वधर्मेषु समं श्रद्धावानसौ एवमाह—यो हि परपाषण्डं प्रशंसति, स आत्मपाषण्डं क्षिणोति परपाषण्डं चापि बाढ़तरम् उपहन्ति । अतः समवाय एव साधुः ।

अशोकोऽध्वगानां सौकर्याय स्थाने स्थाने आवासान् उदपानानि च अकारयत्, कूपांश्चाखानयत् । न केवलं मनुष्याणामेव हितं तस्याभिप्रेतमासीदपितु प्राणिमात्रस्यैव हितभावनया स प्रेरित आसीत् । अतएव स पशुचिकित्साया अपि प्रबन्धमकारयत् । एवं हि स आह—द्वे एव चिकित्से बहुमते । पशुचिकित्सा मनुष्यचिकित्सा च । प्राणिमात्रस्य अनालम्भनाय अविहिंसायै च स जनान् प्रैरिरत् । एवं प्राणिमात्रस्य हिते रतोऽसौ धर्मराजधार्मिक-

चक्रवर्ती देवानां प्रियः प्रियदर्शी महाराजोऽशोकश्चिरं भरतभुवं शशास स्वेन गौरववता यशःपूरेण च तामाप्लावयामास।

—सम्पादकस्य

## प्रश्नाः

१—अशोकविषये किं ज्ञायते भवद्भिः ? तत्सर्वं सरलया संस्कृतभाषया लिख।

२—अशोकेन प्रचारितस्य धर्मस्य किं स्वरूपम् ?

३—एषु वाक्येषु रिक्तस्थानानि उचितपददानेन पूरयत—

क—अहो···अहो धर्मघोष इति।

ख—तस्मिन् संगरे हि परःसहस्रा····· निहताः।

ग—यो हि ··गर्हते आत्मपाषण्डं च प्रशंसति स आत्मपाषण्डं क्षिणोति।

४—एषु वाक्येषु तिङ्वाच्यपरिवर्तनं क्रियताम्—

क—धर्ममेव स बहु मेने।

ख—तेन हि सम्राजा जनेषु धर्माभिरुचि-प्रवर्धनाय स्थाने-स्थाने शिलासु स्तम्भेषु च लेखा लेखापिताः।

ग—ततो मनःशान्तिमाप्तुं स बुद्धं शरणं गतः।

५—अधोनिर्दिष्टेषु पदेषु व्याकरण-प्रक्रियां स्पष्टीकुरु—

फलेग्रहिः, प्रैरिरत्, क्षिणोति, उपहन्ति, कामयामास, आज्ञापयामास।

## त्रयोविंशः पाठः

# धूर्त-ब्राह्मण-कथा

अस्ति कश्चिद्ब्राह्मणः पशुबन्धननिमित्तं पशुमादाय स्ववेश्मन्युच्चलितः। अर्धपथे च धूर्तैर्दृष्टाभिहितम्। भक्षयामोऽद्यैनमजमिति। ततस्तस्यैवाग्रतः कृतसंकल्पैर्मार्गाभिमुख्येनागच्छद्भिरेकद्वित्रिप्रविभागेन यातम्। यस्तु तेषामग्रगः तेन ब्राह्मणोऽभिहितः—अवश्यमसौ साधो! श्वा सगुणः, येन त्वया स्कन्धेनोह्यते। अथवा श्वापदव्यापादने कुशल इति। एवमुक्त्वापक्रान्तः। ब्राह्मणश्चिन्तयामास—किमनेन दुरात्मनाभिहितम्। कथमहं श्वानं स्कन्धे करिष्यामि। यावदन्यौ द्वौ धूर्तौ संप्राप्तौ ताभ्यामपि ब्राह्मणोऽभिहितः—ब्रह्मन्! किमिदमसदृशम्? यज्ञोपवीतमक्षमाला-कमण्डलुस्त्रिपुण्ड्रकं स्कन्धे च श्वा! अथवा शशमृगसूकरव्यापादने नूनमयं कुशल इति। एवमुक्त्वा तावपक्रान्तौ। ब्राह्मणस्तु जिज्ञासया पशुं भूमौ निक्षिप्य सुनिपुणं कर्णशृंगपुच्छादीनवयवान् परामृश्याचिन्तयत्—मूर्खास्ते कथमिमं श्वानमवधारयन्ति। पुनः स्कन्धेनादाय प्रायात्। अथान्यैस्त्रिभिरभिहितो ब्राह्मणः न त्वया स्प्रष्टव्या वयमिति। एकपार्श्वेन गम्यताम् यत्कारणम् अशुचिरसि लिङ्गमात्रेण ब्राह्मणः, श्वसंपर्कान्नूनं व्याधो भविष्यसि, इत्युक्त्वापक्रान्ताः। अथासौ ब्राह्मणश्चिन्तयामास।

किमिदमापतितम् अथवा यतो बहुत्वम् तत्प्रमाणम्। दृश्यन्ते

च लोके विपरीतानि । कदाचिदयं श्वरूपी राक्षसः स्यात्, किम् अस्य शक्यं स्वरूपं कर्तुमिति ? एवं संप्रधार्य भूमौ निक्षिप्यानवलोकयन्नेव प्रायात्प्रायश्चित्तभयात् । तैरपि भक्षितोऽसौ पशुरिति ।

—तन्त्राख्यायिकात्ः

### प्रश्नाः

१—इयं कथा हिन्दीभाषया लिख्यताम् ।

२—धूर्तैः कथं वञ्चितो ब्राह्मणः ?

३—अधोलिखितेषु वाक्येषु तिङ्वाच्यपरिवर्तनं कुरु ।

क—अवश्यमसौ साधो सगुणो येन त्वया स्कन्धेनोह्यते ।

ख—अर्धपथे च धूर्तैर्द्वाऽभिहितम् ।

ग—एवमुक्त्वा तावपक्रान्तौ ।

घ—तैरपि भक्षितोऽसौ पशुः ।

४—एतानि पदानि स्ववाक्येषु प्रयुङ्ग्ध्वम् ।

आदाय, अपक्रान्तः, निक्षिप्य, प्रमाणम् ।

५—एकद्वित्रिप्रविभागेन इत्यत्र कः समासः ।

६—उच्चलितः, सम्प्रधार्य, व्यवसितम्, अभिहितः—एतेषु के धातवः, के च कृत्प्रत्ययाः ?

## चतुर्विंशः पाठः

# विदुरनीतिः

यस्य कृत्यं न विघ्नन्ति शीतमुष्णं भयं रतिः ।
समृद्धिरसमृद्धिर्वा स वै पण्डित उच्यते ॥१॥

यस्य संसारिणी प्रज्ञा धर्मार्थावनुवर्तते ।
कामादर्थं वृणीते यः स वै पण्डित उच्यते ॥२॥

यथाशक्ति चिकीर्षन्ति यथाशक्ति च कुर्वते ।
न कञ्चिदवमन्यन्ते नराः पण्डितबुद्धयः ॥३॥

क्षिप्रं विजानाति चिरं शृणोति
विज्ञाय चार्थं भजते न कामात् ।
नासम्पृष्टो ह्युपयुङ्क्ते परार्थे
तत्प्रज्ञानं प्रथमं पण्डितस्य ॥४॥

नाप्राप्यमभिवाञ्छन्ति नष्टं नेच्छन्ति शोचितुम् ।
आपत्सु च न मुह्यन्ति नराः पण्डितबुद्धयः ॥५॥

निश्चित्य यः प्रक्रमते नान्तर्वसति कर्मणः ।
अवन्ध्यकालो वश्यात्मा स वै पण्डित उच्यते ॥६॥

अमित्रं कुरुते मित्रं मित्रं द्वेष्टि हिनस्ति च ।
कर्म चारभते दुष्टं तमाहुर्मूढचेतसम् ॥७॥

श्राद्धं पितृभ्यो न ददाति दैवतानि न चार्चति ।
सुहृन्मित्रं न लभते तमाहुर्मूढचेतसम् ॥८॥
अनाहूतः प्रविशति अपृष्टो बहु भाषते ।
अविश्वस्ते विश्वसिति मूढचेता नराधमः ॥९॥
परं क्षिपति दोषेण वर्तमानः स्वयं तथा ।
यश्च क्रुध्यत्यनीशानः स च मूढतमो नरः ॥१०॥
अशिष्यं शास्ति यो राजन् ! यश्च शून्यमुपासते ।
कदर्यं भजते यश्च तमाहुर्मूढचेतसम् ॥११॥
एकः पापानि कुरुते फलं भुङ्क्ते महाजनः ।
भोक्तारो विप्रमुच्यन्ते कर्ता दोषेण लिप्यते ॥१२॥
एकः स्वादु न भुञ्जीत एकश्चार्थान्न चिन्तयेत् ।
एको न गच्छेदध्वानं नैकः सुप्तेषु जागृयात् ॥१३॥
एकः क्षमावतां दोषो द्वितीयो नोपपद्यते ।
यदेनं क्षमया युक्तमशक्तं मन्यते जनः ॥१४॥
सोऽस्य दोषो न मन्तव्यः क्षमा हि परमं बलम् ।
क्षमा गुणो ह्यशक्तानां शक्तानां भूषणं क्षमा ॥१५॥
एको धर्मः परं श्रेयः क्षमैका शान्तिरुत्तमा ।
विद्यैका परमा तृप्तिरहिंसैका सुखावहा ॥१६॥
वरप्रदानं राज्यं च पुत्रजन्म च भारत ।
शत्रोश्च मोक्षणं कृच्छ्रात्त्रीणि चैकं च तत्समम् ॥१७॥

भक्तं च भजमानं च तवास्मीति च वादिनम् ।
त्रीनेतान् शरणं प्राप्तान् विषमेऽपि न सन्त्यजेत् ।।१८।।

चत्वारि राज्ञा तु महाबलेन
वर्ज्यान्याहुः पण्डितस्तानि विद्यात् ।
अल्पप्रज्ञैः सह मन्त्रं न कुर्यात्
न दीर्घसूत्रैः रभसैश्चारणैश्च ।।१९।।

चत्वारि ते तात ! गृहे वसन्तु
श्रियाभिजुष्टस्य गृहस्थधर्मे ।
वृद्धो ज्ञातिरवसन्नः कुलीनः
सखा दरिद्रो भगिनी चानपत्या ।।२०।।

पञ्चाग्नयो मनुष्येण परिचर्याः प्रयत्नतः ।
पिता मातागिनरात्मा च गुरुश्च भरतर्षभ ।।२१।।
पञ्चैव पूजयँल्लोके यशः प्राप्नोति केवलम् ।
देवान् पितॄन् मनुष्यांश्च भिक्षूनतिथिपञ्चमान् ।।२२।।
पञ्च त्वानुगमिष्यन्ति यत्र यत्र गमिष्यसि ।
मित्राण्यमित्रा मध्यस्था उपजीव्योपजीविनः ।।२३।।
षड् दोषा पुरुषेणेह हातव्या भूतिमिच्छता ।
निद्रा तन्द्रा भयं क्रोध आलस्यं दीर्घसूत्रता ।।२४।।
अर्थागमो नित्यमरोगिता च
प्रिया च भार्या प्रियवादिनी च ।

वश्यश्च पुत्रोऽर्थकरी च विद्या
षड् जीवलोकस्य सुखानि राजन् ॥२५॥

प्रश्नाः

१—अधोनिर्दिष्टानां पदानां प्रकृतिप्रत्ययप्रविभागं स्पष्टीकुरु—
विघ्नन्ति, द्वेष्टि, हिनस्ति, विद्यात्, जागृयात्।

२—के षड् दोषाः पुरुषेण हातव्याः ?

३—'दीर्घसूत्राः' के भवन्ति ?

४—'प्रक्रमते' इत्यत्रात्मनेपदं कुतः ?

## पञ्चविंशः पाठः

# शुकनासोपदेशः

अथ समुपस्थितयौवराज्याभिषेकं चन्द्रापीडं कदाचिद् दर्शनार्थमागतं शुकनासः सविस्तरम् उवाच—

"तात चन्द्रापीड ! अधीतसर्वशास्त्रस्य ते न अल्पम् अपि उपदेष्टव्यम् अस्ति। केवलम् अतिगहनं खलु तमो यौवनप्रभवम्, दारुणो लक्ष्मीमदः, विषमः विषयविषास्वादमोह इति विस्तरेणाभिधीयसे। यौवनारम्भे प्रायः शास्त्र-जल-प्रक्षालन-निर्मलापि कालुष्यमुपयाति बुद्धिः, अपहरति च वात्या इव शुष्कपत्रम् अतिदूरं

यौवनसमये पुरुषं प्रकृतिः, नाशयति च उन्मार्गप्रवर्तकः पुरुषम् अत्यासङ्गो विषयेषु । गुरूपदेशश्च नाम अखिल-मल-प्रक्षालन-क्षमम् अजलं स्नानम् । कुमार ! आलोकयतु तावत् लक्ष्मीमेव प्रथमं भवान् । एवंविधम् अपरिचितमिह जगति न किञ्चदस्ति यथेयम् आनार्या ? लब्धाऽपि दुःखेन परिपाल्यते; न परिचयं रक्षति, न रूपमालोकयते, न कुलक्रमम् अनुवर्तते, न शीलं पश्यति, न धर्मम् अनुरुध्यते, न त्यागम् आद्रियते, न विशेषज्ञतां विचारयति, प्रबलविधृता अपि इयं परिस्खलति, जनं गुणवन्तम् अपवित्रमिव न स्पृशति । यथा यथा चेयं चपला दीप्यते तथा तथा दीपशिखेव कज्जलमलिनमेव केवलं कर्म उद्वमति । नहि तं पश्यामि यो हि अपरिचितया अनया न निर्भरम् उपगूढः यो वा न विप्रलब्धः । एवंविधयाऽपि चानया दुराचारया कथमपि दैववशेन परिगृहीता विक्लवा भवन्ति राजानः सर्वाविनयाधिष्ठानतां च गच्छन्ति । अभिषेकसमये एव चैतेषां मङ्गलकलशजलैरिव प्रक्षाल्यते दाक्षिण्यम्, उष्णीषबन्धेन इवाच्छाद्यते जरागमनस्मरणम्, चामरपवनेन इवापह्रियते सत्यवादिता, वेत्रदण्डैरिव उत्सार्यन्ते गुणाः, जयकलकलैरिव तिरस्क्रियन्ते साधुवादाः । किंच, द्यूतं विनोद इति, पानं विलास इति, प्रमत्तता शौर्यम् इति, पराभवक्षमत्वं क्षमा इति, स्वच्छन्दता प्रभुत्वम् इति, दोषानपि गुणपक्षमध्यारोपयद्भिः अन्तः स्वयम् अपि विहसद्भिः प्रतारणकुशलैः धूर्तैः अमानुषलोकोचिताभिः स्तुतिभिः प्रतार्यमाणाः मर्त्यधर्माणो-

ऽपि दिव्यांशावतीर्णम् इव आत्मानम् उत्प्रेक्षमाणाः सर्वजनस्यो-पहास्यताम् उपयान्ति। दर्शनप्रदानम् अपि अनुग्रहं गणयन्ति, आज्ञाम् अपि वरप्रदानं मन्यन्ते, मिथ्यामाहात्म्यगर्वनिर्भराश्च न प्रणमन्ति देवताभ्यः, न मानयन्ति मान्यान्, सर्वथा तमेव आल-पन्ति, तमेव बहु मन्यन्ते योऽहर्निशं विगतान्यकर्तव्यः स्तौति, यो वा माहात्म्यम् उद्भावयति।

तद् अस्मिन् राज्यतन्त्रे यौवने च कुमार! तथा प्रयतेथा यथा नोपहस्यसे जनैः, न निन्द्यसे जनैः, न धिक्क्रियसे गुरुभिः न शोच्यसे विद्वद्भिः न वञ्च्यसे धूर्तैः, न प्रलोभ्यसे वनिताभिः, न नर्त्यसे मदेन, न विडम्ब्यसे लक्ष्म्या, न चाऽपह्रियसे सुखेन। कामं भवान् प्रकृत्या एव धीरः, तथापि भवद्गुणसन्तोषो माम् एवं मुखरी-कृतवान् इदम् एव च पुनः पुनरभिधीयसे। विद्वांसम् अपि, सचेतनम् अपि, धीरम् अपि, अभिजातम् अपि, च पुरुषम् खली-करोति लक्ष्मीरिति।

— कादम्बरीतः

प्रश्नाः

१—शुकनासोपदेशस्य सारः स्वेन संस्कृतेनानूद्यताम्।

२—लक्ष्म्याः कीदृशं स्वरूपं वर्णितं शुकनासेन?

३—शुकनासोपदेशः कुत्र वर्तते ? कस्तस्य ग्रन्थस्य प्रणेता ? तस्य विषये जानीषे ?

४—स्तौति, अपालयत्, नाशयति, मन्यते, अभिधाय, आद्रियते, दीप्यते— एषु प्रत्येक प्रयोगेषु प्रक्रियां स्पष्टीकुरु ।

५—स्तु, मन्, धा—इत्येतेषां धातूनां लटि लोटि च रूपाणि लिख ।

## षड्त्रिंशः पाठः

# सुभाषितानि

येन धौता गिरः पुंसां विमलैः शब्दवारिभिः ।
तमश्चाज्ञानजं भिन्नं तस्मै पाणिनये नमः ॥१॥
नागुणी गुणिनं वेत्ति गुणी गुणिषु मत्सरी ।
गुणी च गुणरागी च विरलः सरलो जनः ॥२॥
संपत्तौ च विपत्तौ च महतामेकरूपता ।
उदये सविता रक्तो रक्तश्चास्तमये तथा ॥३॥
उपकारिषु यः साधुः साधुत्वे तस्य को गुणः ।
अपकारिषु यः साधुः स साधुः सद्भिरुच्यते ॥४॥
शरदि न वर्षति गर्जति वर्षति वर्षासु निःस्वनो मेघः ।
नीचो वदति न कुरुते, न वदति सुजनः करोत्येव ॥५॥

शैले शैले न माणिक्यं मौक्तिकं न गजे गजे ।
साधवो नहि सर्वत्र चन्दनं न वने वने ॥६॥

संपदि यस्य न हर्षो विपदि विषादो रणे न भीरुत्वम् ।
तं भुवनत्रय-तिलकं जनयति जननी सुतं विरलम् ॥७॥

छिन्नोऽपि रोहति तरुश्चन्द्रः क्षीणोऽपि वर्धते लोके ।
इति विमृशन्तः सन्तः सन्तप्यन्ते न ते विपदा ॥८॥

चातकस्त्रिचतुरान् पयःकणान्
याचते जलधरं पिपासया ।
सोऽपि पूरयति विश्वमम्भसा
हन्त हन्त महतामुदारता ॥९॥

सुखार्थी वा त्यजेद्विद्यां विद्यार्थी वा त्यजेत्सुखम् ।
सुखार्थिनः कुतो विद्या कुतो विद्यार्थिनः सुखम् ॥१०॥

विद्या ददाति विनयं विनयाद्याति पात्रताम् ।
पात्रत्वाद् धनमाप्नोति धनाद् धर्मं ततः सुखम् ॥११॥

मातृवत् परदारेषु परद्रव्येषु लोष्टवत् ।
आत्मवत् सर्वभूतेषु यः पश्यति स पश्यति ॥१२॥

द्वाविमौ पुरुषौ राजन् ! स्वर्गस्योपरि तिष्ठतः ।
प्रभुश्च क्षमया युक्तो दरिद्रश्च प्रदानवान् ॥१३॥

गन्धेन गावः पश्यन्ति वेदैः पश्यन्ति ब्राह्मणाः ।
चारैः पश्यन्ति राजानश्चक्षुर्भ्यामितरे जनाः ॥१४॥

सत्येन रक्ष्यते धर्मो विद्या योगेन रक्ष्यते ।
मृजया रक्ष्यते रूपं कुलं वृत्तेन रक्ष्यते ॥१५॥

संरोहति शरैर्विद्धं वनं परशुना हतम् ।
वाचा दुरुक्तं बीभत्सं न प्ररोहति वाक्क्षतम् ॥१६॥

दारिद्र्यान्मरणाद्वा मरणं संरोचते न दारिद्र्यम् ।
अल्पक्लेशं मरणं दारिद्र्यमनन्तकं दुःखम् ॥१७॥

अयं निजः परो वेति गणना लघुचेतसाम् ।
उदारचरितानां तु वसुधैव कुटुम्बकम् ॥१८॥

आशाया ये दासास्ते दासाः सर्वलोकस्य ।
आशा येषां दासी तेषां दासायते लोकः ॥१९॥

गलन्ति गिरयः कामं युगान्त-पवनाहृताः ।
कृच्छ्रेऽपि न चलत्येव धीराणां निश्चलं मनः ॥२०॥

कोऽतिभारः समर्थानां किं दूरं व्यवसायिनाम् ।
को विदेशः सविद्यानां कः परः प्रियवादिनाम् ॥२१॥

सव परवशं दुःखं सर्वमात्मवशं सुखम् ।
एतद्विद्यात् समासेन लक्षणं सुखदुःखयोः ॥२२॥

अधमा धनमिच्छन्ति धनमानौ च मध्यमाः ।
उत्तमा मानमिच्छन्ति मानो हि महतां धनम् ॥२३॥

अभ्यासः—एषु सुभाषितेषु यथेच्छं पञ्च कण्ठीकरणीयानि

## प्रश्नाः

१—मृजया इत्यस्य कोऽर्थ

२—अधोलिखितेषु शब्देषु व्याकरण-प्रक्रियां स्पष्टीकुरुत—
उच्यते, रक्ष्यात् विद्यात् ।

३—त्रिचतुरान्, वाक्क्षतम्, पवनाहृताः—एषु के समासाः के च तेषां विग्रहाः ?

४—दारशब्दस्य किं लिङ्गम् ? परदारेषु इत्यस्य को विग्रहः ?

## सप्तविंशः पाठः

# कुन्दमाला (प्रथमोऽङ्कः)

(ततः प्रविशति रथाधिरूढ़ा सीता सारथिर्लक्ष्मणश्च)

**लक्ष्मणः**—इत इतोऽवतरत्वार्या । एतानि गहनतरुलताप्रतान-संरुद्धतया रथप्रवेशायोग्यानि भागीरथीतीरकाननानि । तद-वतरत्वार्या ।

(सीता अवतीर्य परिक्रामति)

**लक्ष्मणः**—परिक्रम्य (आत्मगतम्) समादिष्टोऽहमार्येण, अथवा स्वामिना—वत्स लक्ष्मण ! देव्याः किल सीतायाः रावण-भवनसंस्थानाच्चारित्रं प्रति समुत्पन्नविमर्शानां पौराणा-मन्यादृशाः प्रलापाः प्रवर्तन्ते तन्न शक्नोमि सीतामात्रस्य कृते शरच्चन्द्रनिर्मलस्येक्ष्वाकुकुलस्य कलङ्कमुत्पादयितुम् । सीतया चाहं गर्भिणीभावसुलभेन दोहदेन भागीरथीदर्शनं

प्रार्थितः । तस्मात् त्वमनेन गङ्गागमन-व्याजेन सुमन्त्राधिष्ठितं रथमारोप्य कस्मिंश्चिद्वनोद्देशे परित्यज्य निवर्तस्व इति । तदहमपि स्वजनविस्रम्भनिर्विशङ्कां देवीमादाय गृहहरिणीमिव वध्यभूमिं वनमुपनयामि ।

सीता—वत्स ! सुष्ठु परिश्रान्ताऽस्मि । एतस्यां पादपच्छायायां मुहूर्तमुपविश्य विश्रमिष्यामि ।

(सीता उपविश्य विश्रान्तिं नाटयति)

लक्ष्मणः—(आत्मगतम्) एषा विश्रान्ता सुखोपविष्टा च देवी, तदयमेवावसरो यथास्थितं व्यवसातुम् । (प्रकाशम्) (सहसा पादयोर्निपत्य) अयमनवरतप्रवासदुःखभागी निर्लक्षणो लक्ष्मणो विज्ञापयति—स्थिरीक्रियतां हृदयम् ।

सीता—(ससम्भ्रमम्)—अपि कुशलमार्यपुत्रस्य ?

लक्ष्मणः—(वन निर्दिश्य) एवं गते कीदृशं कुशलमार्यस्य ?

सीता—आर्यया कैकेय्या पुनरपि समादिष्टो वनवासः ?

लक्ष्मणः—समादिष्टो वनवासः, न पुनरम्बया ।

सीता—केन पुनः समादिष्टः ?

लक्ष्मणः—आर्येण ।

सीता—कथं समादिष्टः ?

लक्ष्मणः—(वाष्पस्तम्भमभिनीय)

आर्यस्यादेश इत्येव वक्तुमिच्छामि यत्नतः ।
तथापि हृदयं गत्वा ग्रन्थिं बध्नाति भारती

सीता—किं मम समादिष्टो वनवासः ?

लक्ष्मणः—न केवलं तव आत्मनोऽपि ।

सीता—कथमिव ?

लक्ष्मणः—प्रकामभुक्ते स्वगृहाभिमानात्

सुहृज्जनेनाहितयागवह्नौ ।
आर्यस्य रम्ये भवनेऽपि वास-
स्तव प्रवासे वनवास एव ॥

सीता—वत्स ! परिस्फुटं कथय, अद्य कथं मम वनवास आर्य-
पुत्रस्य वनवास इति ।

लक्ष्मणः—किमपरं कथयामि मन्दभाग्यः ।
त्यक्ता किल त्वमार्येण चारित्रगुणशालिना ।
मयापि किल गन्तव्यं त्यक्त्वा त्वामिह कानने ॥

सीता—हा तात, आर्यकोसलाधिप ! अद्योपरतोऽसि (मोहं गच्छति)

लक्ष्मणः—(ससम्भ्रमम्) कष्टं भोः ! कष्टं भोः ! निर्घातपात-दारुणेनानेन परित्यागवार्ताश्रवणेन नूनमुपरता देवी । (निर्वर्ण्य) दिष्ट्या श्वसिति । तत्को नु खल्वस्याः प्रत्यानयनेऽभ्युपायः । (विषादं नाटयति) आश्चर्यमाश्चर्यम्—

भागीरथी-शीकर-शीतलेन
सम्भाव्यमाना मृदुनाऽनिलेन ।
मद्भाग्यशेषेण च बोध्यमाना
प्रत्यागता राजसुता कथञ्चित् ।।

## प्रश्नाः

१—लोट् लकारः कुत्र प्रयुज्यते ? प्रस्तुतात् पाठात् तस्योदाहरणत्रयं देहि । लकारस्य कोऽर्थं इत्यपि च प्रतिपादय ।

२—निम्नलिखितेषु पदेषु प्रकृतिप्रत्ययप्रविभागं प्रदर्शय—
परिक्रामति, निवर्तस्व, अधिष्ठितम्, बध्नाति, श्वसिति ।

३—किमर्थं लक्ष्मणः सीतां वने परित्यक्तुमानयति, सीतायाश्च तदानीं कीदृशी समवस्था ?

४—कुन्दमालानाटकस्य कः कर्ता ? अन्यस्य कस्यापि प्रसिद्धस्य संस्कृत-नाटकनिर्मातुर्नामोल्लेखः क्रियताम् ।

५—निम्नलिखितेषु वाक्येषु तिङ्वाच्यपरिवर्तनं क्रियताम्—
क—आर्यया कैकेय्या पुनरपि समादिष्टो वनवासः ?
ख—अहं तिष्ठामि मन्दभाग्यः ।
ग—त्वमार्येण त्यक्ता ।
घ—आर्येण एवम् उक्तम् ।

## अष्टाविंशः पाठः

# कुन्दमाला (ख) भागः

सीता—वत्स लक्ष्मण ! किं गतोऽसि ?

लक्ष्मणः—आज्ञापय तिष्ठाम्येव मन्दभाग्यः ।

सीता—किमुपालभ्यास्मि परित्यक्ता ?

लक्ष्मणः—कीदृशो देव्या उपालम्भः ?

सीता—अहो मे अधन्यत्वम् किमुपालम्भमात्रेण विना निगृहीताऽस्मि । किमस्ति किमपि तेन सन्दिष्टम् ?

लक्ष्मणः—अस्ति ।

सीता—कथय कथय ।

लक्ष्मणः—तुल्यान्वयेत्यनुगुणेति गुणोन्नतेति
दुःखे सुखे च सुचिरं सहवासिनीति ।
जानामि केवलमहं जनवादभीत्या
सीते ! त्यजामि भवतीं न तु भावदोषात् ॥

अयमार्यस्य सन्देशः ।

सीता—कथं जनवादभयेनेति । किमपि वचनीयं मेऽस्ति ?

लक्ष्मणः—कीदृशमार्याया वचनीयम्
ऋषीणां लोकपालाना-
मार्यस्य मम चाग्रतः ।

अग्नौ शुद्धि गता देवी

किन्तु—

सीता—(लज्जां नाटयति) कथय, किन्तु···

लक्ष्मण:—···लोको निरंकुश: ॥

इदमपरमार्येण सन्दिष्टम् ।

सीता—किन्नु खलु भविष्यति ।

लक्ष्मण:—त्वं देवि चित्तनिहिता गृहदेवता मे

स्वप्नागता शयनमध्यसखी त्वमेव ।

दारान्तराहरणनि:स्पृहमानसस्य

यागे तव प्रतिकृतिर्मम धर्मपत्नी ॥

सीता—एवं सन्दिशतार्यपुत्रेण परित्यागदु:खं मयि निरवशेषमपनीतम् ।

लक्ष्मण:—क: प्रतिसन्देश: ?

सीता—कस्य ?

लक्ष्मण:—आर्यस्य ।

सीता—एवं गतेऽपि प्रतिसन्देश: ! श्वश्रूणां पुनर्मम वचनात् पादवन्दनं कृत्वा विज्ञापय—एवमहं नीरक्षा श्वापदसमाकीर्णे वने प्रतिवसन्ती च सर्वथा हृदयेनार्याभिरनुग्रहीतव्येति ।

लक्ष्मण:—प्रतिगृहीतेयमाज्ञा । आर्यस्य न किञ्चित् सन्दिष्टम् ।

सीता—तथा निष्ठुरो नाम सन्दिश्यते इत्यप्रतिहतवचनता

लक्ष्मणस्य न सीताया धन्यत्वम् । तथा मम वचनात्तं जनं विज्ञापय—मन्दभागिनीमनुशोचन् वर्णाश्रमपरिपालनमनभिघ्नन्नात्मानं न बाधय । सद्धर्मे स्वशरीरे सावधानो भवेति । वत्स लक्ष्मण ! किमुपालभे महाराजम् ?

लक्ष्मणः—किमेतावत्यपि न प्रभवति देवी ?

सीता—एवमपि तं जनं विज्ञापय—न युक्तं तव निरपराधमिमं जनं सपदि हृदयतो निर्वासयितुं किं पुनर्विषयत इति ।

लक्ष्मणः—सन्देष्टव्यमार्यया सन्दिष्टम्—

आर्या निर्वासिता नाम हृदयात्प्रभविष्णुना ।
कथं गृहाद् गृहं नाम कथं जनपदादपि ॥

सीता—एवमपि मम वचनाद् विज्ञापयितव्यः—सा तपोवनवासिनी सर्वथा सीमन्तनिहितेनाञ्जलिना विनिवेदयति यदहं निर्गुणा चिरपरिचितेति वा, अनाथेति वा, सीतेति वा स्मरणमात्रकेणानुग्रहीतव्येति ।

लक्ष्मणः—इमं सन्देशमाकर्ण्य क्षते क्षारमिवाहितम् ।
दशामसह्यां शोकस्य व्यक्तमार्यो गमिष्यति ॥

सीता—वत्स लक्ष्मण ! प्रणन्तव्या त्वया मम वचनाद् राघवकुलराजधानी भगवत्ययोध्या । शुश्रूषितव्यः प्रतिमागतो महाराजः । साधयितव्या श्वश्रूणामाज्ञप्तिः । समाश्वास-

यितव्याः प्रियंवदा मम प्रियसख्यः। स्मर्तव्या सर्वकालं मन्दभागिनी।

(इति रोदिति)

लक्ष्मणः—(सोद्वेगम्)

आर्यां स्वहस्तेन वने विमोक्तुं
श्रोतुश्च तस्याः परिदेवितानि।
सुखेन लङ्कासमरे हतं मा-
माजीवयन्मारुतिरात्तवैरः ॥

सीता—वत्स लक्ष्मण ! आसन्नास्तमयः सूर्यः, दूरे चेतो मानुषसम्पातः। सञ्चरन्ति श्वापदाः। गच्छ न युक्तं परिलम्बितुम्।

लक्ष्मणः—(अञ्जलिं बद्ध्वा) सर्वपश्चिमोऽयं लक्ष्मणस्य प्रणामाञ्जलिः। तत्सावधानं परिगृह्यताम्।

## प्रश्नाः

१—रामस्य सीतां प्रति कः सन्देशः, तस्याश्च रामं प्रति कः प्रतिसन्देशः इत्युभयमपि सरलतया संस्कृतगिरा लिख :

२—अधोलिखितानां पदानां प्रक्रियां संक्षिप्तां प्रदर्शय—
प्रभविष्णुना, निर्वासयितुम्, नीरक्षा, आत्तवैरः, उपालभे।

३—निम्ननिर्दिष्टानि वाक्यानि प्रकरणनिर्देशपुरःसरं व्याख्येयानि—

(क) किन्तु लोको निरङ्कुशः ।

(ख) किमेतावत्यपि न प्रभवति देवी ।

४—कुन्दमालात उद्धृतेऽस्मिन् पाठद्वये सीतायाः कीदृशं चरित्रं परिस्फुटं भवति ? तद्विशदं प्रतिपादय ।

५—अङ्कस्य लक्षणं दत्त्वा नाटकस्याङ्गानि ब्रूहि ।

६—अत्र पाठद्वये को रसः ? यदि करुणस्तर्हि कथं सोऽत्र नाटकांशे परिपोषं प्राप्तः ?

## एकोनत्रिंशः पाठः

# कथामुखम्

## (पञ्चतन्त्रस्य)

**अस्ति दाक्षिणात्ये जनपदे महिलारोप्यं नाम नगरम् । तत्र सकलार्थिसार्थकल्पद्रुमः सकलकलापारंगतोऽमरशक्तिर्नाम राजा बभूव । तस्य त्रयः पुत्राः परमदुर्मेधसो बहुशक्तिरुग्रशक्तिरनेकशक्तिश्चेतिनामानो बभूवुः । अथ राजा तान् शास्त्रविमुखानालोक्य सचिवानाहूय प्रोवाच—"भोः ! ज्ञातमेतद् भवद्भिर्यन्ममैते पुत्राः शास्त्रविमुखा विवेकरहिताश्च । तदेतान्पश्यतो मे महदपि राज्यं न सौख्यमावहति ।**

**अथवा साध्विदमुच्यते,—**

अजातमृतमूर्खाणां मृताजातौ सुतौ वरम् ।
यतस्तौ स्वल्पदुःखाय यावज्जीवं जड़ो दहेत् ॥

तदेतेषां यथा बुद्धिप्रकाशो भवति तथा कोऽप्युपायोऽनुष्ठीयताम् । अत्र च महतीं वृत्तिं भुञ्जानानां पण्डितानां पञ्चशती तिष्ठति । ततो यथा मम मनोरथाः सिद्धिं यान्ति तथा अनुष्ठीयताम् इति ।

तत्रैकः प्रोवाच—देव ! द्वादशभिर्वर्षैर्व्याकरणं श्रूयते । ततो धर्मशास्त्राणि मन्वादीनि, अर्थशास्त्राणि चाणक्यादीनि, एवं च ततो धर्मार्थशास्त्राणि ज्ञायन्ते । ततः प्रतिबोधनं भवति ।

तन्मध्यतोऽथापरः सुमतिर्नाम सचिवः प्राह—"अशाश्वतोऽयं जीवितव्यविषयः । प्रभूतकालज्ञेयानि शब्दशास्त्राणि । तत्संक्षेपमात्रं शास्त्रं किञ्चिदेतेषां प्रबोधनार्थं चिन्त्यतामिति । उक्तं च यतः—

अनन्तपारं किल शब्दशास्त्रं
स्वल्पं तथायुर्बहवश्च विघ्नाः ।
सारं ततो ग्राह्यमपास्य फल्गु
हंसैर्यथा क्षीरमिवाम्बुमध्यात् ॥

तदत्रास्ति विष्णुशर्मा नाम ब्राह्मणः सकलशास्त्रपारंगतश्छात्रसंसदि लब्धकीर्तिः । तस्मै समर्पयत्वेतान् । स नूनं द्राक्प्रबुद्धान् करिष्यति इति । स राजा तदाकर्ण्य विष्णुशर्माणमाहूय प्रोवाच—भो भगवन् ! मदनुग्रहार्थमेतानर्थशास्त्रं प्रति शीघ्रं यथानन्यसदृशान् विदधासि तथा कुरु । तदाहं त्वां शासनशतेन योजयिष्यामि ।

अथ विष्णुशर्मा तं राजानमूचे—देव ! श्रूयतां तथ्यवचनम् । नाहं विद्याविक्रयं शासनशतेनापि करोमि । पुनरेतांस्तव पुत्रान्मासषट्केन यदि नीतिशास्त्रज्ञान्न करोमि ततः स्वनामत्यागं करोमि । किं बहुना, श्रूयतां ममैष सिंहनादः । नाहमर्थलिप्सुर्ब्रवीमि । ममाशीतिवर्षस्य व्यावृत्तसर्वेन्द्रियार्थस्य न किंचिदर्थेन प्रयोजनम् । किंतु त्वत्प्रार्थना-सिद्ध्यर्थं सरस्वतीविनोदं करिष्यामि । तल्लिख्यतामद्यतनो दिवसः । यद्यहं षण्मासाभ्यन्तरे तव पुत्रान्नयशास्त्रं नाध्यापयेयं ततो नार्हति देवो देवमार्गं संदर्शयितुम् ।

अथासौ राजा तां ब्राह्मणस्यासंभाव्यां प्रतिज्ञां श्रुत्वा ससचिवः प्रहृष्टो विस्मयान्वितस्तस्मै सादरं तान्कुमारान् समर्प्य परां निर्वृतिमाजगाम । विष्णुशर्मणापि तानादाय तदर्थं मित्रभेद-मित्रप्राप्ति-काकोलूकीय-लब्धप्रणाशाऽपरीक्षितकारकाणि चेति पञ्च तन्त्राणि रचयित्वा पाठितास्ते राजपुत्राः ॥

### प्रश्नाः

१—पञ्चतन्त्रस्य कानि पञ्च तन्त्राणि ?

तेषां नामानि लिख ।

२—विष्णुशर्मणा किमर्थं पञ्चतन्त्रस्य रचना कृता ?

३—ब्राह्मणेन विष्णुशर्मणा का प्रतिज्ञा कृता ?

४—एषु वाक्येषु उचितपददानेन रिक्तानि स्थानानि पूरयत—

क—तदेतान् पश्यतो मे महदपि······न सौख्यमावहति ।

ख—ततो यथा मम······सिद्धि यान्ति तथा अनुष्ठीयताम् ।

ग—पुनरेतान् तव पुत्रान् यदिमासषट्केन·········न करोमि तदा स्वनामत्यागं करोमि ।

५—किं नाम शब्दशास्त्रम्

## त्रिंशः पाठः

# श्रीगान्धिनः खिस्तीयप्रचारकान् प्रत्युपदेशः

बिल्वग्रामात्प्रतिनिवृत्तः कंचित्कालं लब्धविश्रामो महात्मा गान्धी कदाचिद् बङ्गेषु पर्यटन् कालिकातां गतः । तत्र खिस्तीयप्रचारकमण्डलेन निमन्त्रितो यदवादीत् तत् तस्य खिस्तमतविषयं हिन्दुधर्मविषयं च दर्शनं विशदीकरोतीति समस्य विन्यस्यते । तद्यथा—

मान्याः, न भवतां बहवो विदुरहं खिस्तीयैः—न खिस्तीयाभासैः परं परमार्थखिस्तीयैः—एकोननवत्यधिकाष्टादशशततमे खिस्तसंवत्सरे संसर्गमकरवं यदाऽभिनववयस्कोऽहं लन्दननगर्यां न्यवसम् । स च संसर्गो गच्छता कालेनोत्तरोत्तरम् अवर्धत । अद्याहं खिस्तीये बहु प्रशस्यं पश्यामि परमहं खिस्तवेदाक्षरान्

सारिभिः ख्रिस्तानुगैः सारूप्यम् अधिगन्तुं न प्रभवामि। नम्रं निवेदये हिन्दुधर्मो, यथाहमेतं वेद, निरवशेषं ममान्तरात्मानं परितोषयति। गीतासूपनिषत्सु च यां सान्त्वनां लभे नाहं तां पर्वतभवे ख्रिस्तोपदेशेऽपि विन्दे। तत्र निर्दिष्टं परं पुमर्थं नाहं बहु मन्य इति न। तदङ्गभूतैः कैरप्यनुशासनैः अवासितान्तःकरणोऽस्मीत्यपि न। परमिदं मया भवतां पुरः प्रतिपत्तव्यं यदा सन्देहा मे मानसम् आक्रामन्ति, आशाभङ्गश्च बद्धलक्ष्यं मां प्रेक्षते, लोकं च निरालोकं पश्यामि तदाहं गीताः समाश्रये शोकापहं श्लोकं च लभे। लब्धमात्रे च तस्मिन् शोकसमाकुलोऽप्यहम् एकपदे स्मेराननो भवामि। दुरन्तैर्वृत्तान्तैर्व्याप्तं मे जीवितम्। परं तेषां यदि दृग्गोचरम् अलोप्यं च फलं न लक्षये भगवद्गीताशासनं तत्र कारणमिति।

ख्रिस्तीयप्रचारका यूयं संभिन्नबुद्धीनां प्रतिमोपासकानाम् एषा भूरिति धियेमं भरतखण्डमुपपद्यध्वे। ख्रिस्तमतमार्मिकाणामुपदेष्टॄणामन्यतमः श्रीहेबर इदं पंक्तिद्वयमलिखत् यत् स्मृतमात्रं मम मर्माणि नित्यम् तुदति—तन्नाम भारतं वर्षं यत्र सर्वमितरद् रम्यं मनुष्यो हि केवलो नीच इति। सर्वं भारतं वर्षं संचरतो मम त्वन्यादृश एवानुभवः। पक्षपातासंस्पृष्टेन चेतसाऽश्रान्तं तथ्यमन्वेषमाणोऽहम् इमं देशं पर्यन्ताद् एकस्माद् आपर्यन्तान्तरं बह्वभ्रमम्। परं भगवत्या भागीरथ्या लौहित्येन नदेन कलिन्दतनयया च प्रोक्षिते रुचिरेऽस्मिन् जनपदे जनो नीच इति वक्तुं न पारये।

यूयमेतद्देशजानां परितापकारणानाम् उपलम्भाय तदपनोदाय च इहोपेताः। सम्भावये चेहस्था यूयं वेद्यवेदनोन्मुखा इति। तेन यदि भरतभुवा किंचिदुपदेष्टव्यमस्ति नहि कर्णौ पिधास्यथ, दृशौ मा संवरिष्यथ, हृदयं मा कठिनीकरिष्यथ, येन यदिहोपादेयं स्यात् सर्वं तदुपादीयेत। प्रत्याययामि वो भारते वर्षेऽनल्पमुपादेयमस्तीति।

(सम्पादकस्य कृतः श्रीगान्धिचरितात्)

## प्रश्नाः

१—महात्मना श्रीमता गान्धिना खिस्तधर्म-प्रचारकेभ्यः उपदेशो दत्तस्तस्य सार सरलया संस्कृतगिरा समुद्धर।

२—हेवरमहोदयेन किमुक्तम् आसीत्?
महात्मनो गान्धिनस्तत्र किं मतम्?

३—हिन्दुधर्मस्य कीदृशं माहात्म्यमत्र प्रतिपादितम्? किमर्थं महात्मगान्धिने खिस्तधर्मापेक्षया हिन्दुधर्मोऽधिकम् अरोचत?

४—महात्मनो गान्धिनो जीवनविषये यज्ज्ञायते तत्सर्वं संक्षेपेणापन्यस्यताम्।

५—अधोलिखितेषु पदेषु व्याकरणप्रक्रियां प्रदर्शय—
विशदीकरोति, उपपद्यध्वे, पिधास्यथ, संवरिष्यथ, समुत्तानयिष्यथ, प्रत्याययामि।

६—को नाम लौहित्यो नदः? का च कलिन्दतनया? एतयोरेतन्नामधेयप्रतिलम्भे को हेतुः?

७—'भारते वर्षेऽनल्पमुपादेयमस्ति' इति विषयमवलम्ब्य लघुरेकः प्रवन्धो विरच्यताम् ।

## एकत्रिंशः पाठः

# गङ्गदत्त-प्रियदर्शनकथा

कस्मिंश्चित् कूपे गङ्गदत्तो नाम मण्डूकराजः प्रतिवसति स्म । स कदाचिद् दायादैरुद्वेजितोऽरघट्टघटीमारुह्य निष्क्रान्तः । अथ स चिन्तयन् बिले प्रविशन्तं कृष्णसर्पमपश्यत् । तं दृष्ट्वा भूयोऽप्यचिन्तयत्—यद् एनं तत्र कूपे नीत्वा सकलदायादानाम् उच्छेदं करोमि । उक्तं च—

शत्रुमुन्मूलयेत्प्राज्ञस्तीक्ष्णं तीक्ष्णेन शत्रुणा ।
व्यथाकरं सुखार्थाय कण्टकेनेव कण्टकम् ॥

एवं स विभाव्य बिलद्वारं गत्वा तमाहूतवान्—'एह्येहि प्रियदर्शन ! एहि ।' तच्छ्रुत्वा सर्पश्चिन्तयामास—य एष मामाह्वयति स स्वजातीयो न भवति । यतो नैषा सर्पवाणी । अन्येन केनापि सह मम मर्त्यलोके सन्धानं नास्ति तदत्रैव दुर्गे स्थितस्तावद्वेद्मि कोऽयं भविष्यति ! कदाचित् कोऽपि मन्त्रवादी औषधचतुरो वा

मामाहूय बन्धने क्षिपति। अथवा कश्चित् पुरुषो वैरमाश्रित्य कस्यचिद् भक्षणार्थं मामाह्वयति। आह च—"भोः! को भवान्?" स आह—अहं गङ्गदत्तो नाम मण्डूकाधिपतिस्त्वत्सकाशे मैत्र्यर्थमभ्यागतः। तच्छ्रुत्वा सर्प आह—भोः! अश्रद्धेयमेतत्, यत्तृणानां वह्निना सह सङ्गमः। गङ्गदत्त आह—भोः! सत्यमेतत्। स्वभाववैरी त्वमस्माकम्। परं परपरिभवात् प्राप्तोऽहं ते सकाशम्। उक्तं च—

सर्वनाशे च सञ्जाते प्राणानामपि संशये।
अपि शत्रुं प्रणम्यापि रक्षेत् प्राणान् धनानि च॥

सर्प आह—कथय कस्मात्ते परिभवः? स आह—दायादेभ्यः। सोऽप्याह—क्व त आश्रयो वाप्यां, कूपे, तडागे, ह्रदे वा? तत्कथय स्वाश्रयम्। तेनोक्तम्—पाषाणचयनिबद्धे कूपे। सर्प आह—अहो! अपदा वयम्। तन्नास्ति तत्र मे प्रवेशः। प्रविष्टस्य च स्थानं नास्ति, यत्र स्थितस्तव दायादान् व्यापादयामि। तद् गम्यताम्। गङ्गदत्त आह—भोः! समागच्छ त्वम्। अहं सुखोपायेन तत्र तव प्रवेशं कारयिष्यामि। तथा तस्य मध्ये जलोपान्ते रम्यतरं कोटरमस्ति। तत्र स्थितस्त्वं लीलया दायादान् व्यापादयिष्यसि। तच्छ्रुत्वा सर्पो व्यचिन्तयत्—अहं तावत् परिणतवयाः कदाचित् कथंचिन्मूषकमेकं प्राप्नोमि। तत्सुखावहो जीवनोपायोऽयमनेन कुलाङ्गारेण मे दर्शितः। तद्गत्वा तान्

मण्डूकान् भक्षयामि । एवं विचिन्त्य तमाह—भो ! गङ्गदत्त ! यद्येवं तदग्रे भव ! येन तत्र गच्छावः । गङ्गदत्त आह—भोः ! प्रियदर्शन, अहं त्वां सुखोपायेन तत्र नेष्यामि, स्थानं च दर्शयिष्यामि । परं त्वया अस्मत्परिजनो रक्षणीयः । केवलं यानहं तव दर्शयिष्यामि त एव भक्षणीया इति । सर्प आह—साम्प्रतं त्वं मे मित्रं जातम् । तन्न भेतव्यम् । तव वचनेन भक्षणीयास्ते दायादाः । एवमुक्त्वा बिलान्निष्क्रम्य तमालिङ्ग्य च तेनैव सह प्रस्थितः ।

अथ कूपमासाद्य अरघट्टघटिकामार्गेण सर्पस्तेनात्मना स्वालयं नीतः । ततश्च गङ्गदत्तेन कृष्णसर्पं कोटरे धृत्वा दर्शितास्ते दायादाः । ते शनैः शनैर्भक्षिताः । अथ मण्डूकाभावे सर्पेणाभिहितम्—भद्र ! निःशेषितास्ते रिपवः । तत् प्रयच्छ मेऽन्यत् किंचिद्भोजनम् । यतोऽहं त्वयात्रानीतः । गङ्गदत्त आह—भद्र सम्प्रति स्वबिलं प्रति गन्तव्यं त्वया । ततः सर्प उवाच—गङ्गदत्त ! न सम्यग् अभिहितं त्वया । कथमहं तत्र गच्छामि । मदीयबिलदुर्गमन्येन रुद्धं भविष्यति । तस्मादत्रस्थस्य मे मण्डूकमेकैकं स्ववर्गीयं प्रयच्छ । नो चेत् सर्वानपि भक्षयिष्यामि । तच्छ्रुत्वा गङ्गदत्तो व्यचिन्तयत्—अहो । किमेतन्मया कृतं सर्पमानयता । तद्यदि निषेधयिष्यामि, तत्सर्वानपि भक्षयिष्यति । तत्प्रयच्छाम्येकैकं प्रतिदिनं सुहृदम् । एवं निश्चित्य नित्यमेकैकमादिशति । सोऽपि भक्षयित्वा तस्य परोक्षेऽन्यानपि भक्षयति । अथ गच्छता

कालेन सकलमपि कवलितं मण्डूककुलम् । केवलमेको गङ्गदत्त-स्तिष्ठति ।

ततः प्रियदर्शनेन भणितम्—भो ! गङ्गदत्त ! बुभुक्षितोऽहम् तद्दीयतां मे किञ्चिद् भोजनम् । स आह—न त्वयात्र विषये मय्यवस्थिते कापि चिन्ता कार्या । तद्यदि मां प्रेषयसि ततोऽन्य-कूपस्थानपि मण्डूकान् विश्वास्यात्रानयामि । सर्पाज्ञया गङ्गदत्तो-ऽरघट्टघटिकामाश्रित्य कूपाद् विनिष्क्रान्तः । प्रियदर्शनोऽपि तदाकांक्षया तत्रस्थः प्रतीक्षमाणस्तिष्ठति । अथ चिरादनागते गङ्गदत्ते प्रियदर्शनोऽन्यकोटरनिवासिनीं गोधामुवाच—भद्रे ! गङ्गदत्तसकाशं गत्वा मम सन्देशं कथय । येनागम्यतामेकाकि-नापि भवता द्रुततरम्, यद्यन्ये मण्डूका नागच्छन्ति । अहं त्वया विना नात्र वस्तुं शक्नोमि । गोधापि तद्वचनाद् गङ्गदत्तं द्रुततर-मन्विष्य प्रिदर्शनसंदेशं प्रोक्तवती । तदाकर्ण्य गङ्गदत्त आह—

बुभुक्षितः किं न करोति पापं,
क्षीणा नरा निष्करुणा भवन्ति ।
आख्याहि भद्रे ! प्रियदर्शनस्य,
न गङ्गदत्तः पुनरेति कूपम् ।।

एवमुक्त्वा स तां विसर्जयामास ।

### प्रश्नाः

१—किमर्थं गङ्गदत्तेन सर्पः कूपे नीतः ?
किञ्च सर्पेण तत्राचरितम् ?

२—अधोलिखितेषु पदेषु-प्रकृति-प्रत्यय-प्रविभागं प्रदर्शय—

आह्वयति, कारयिष्यामि, प्रयच्छामि ।

३—निम्ननिर्दिष्टानां शब्दानामर्थं हिन्दी-भाषायां लिख—

अरघट्टघटिका, गोधा, दायादान्, कवलितम्, ह्रदे ।

४—अधोलिखितेषु रेखांकितेषु पदेषु विभक्ति-संगतिं कुरु—

(क) तत् प्रयच्छ मे ऽन्यत् भोजनम् ।

(ख) अन्येन केनापि सह मम मर्त्यलोके सन्धानं नास्ति ।

(ग) सर्वनाशे च सञ्जाते प्राणानामपि संशये ।

अपि शत्रुं प्रणम्यापि रक्षेत् प्राणान् धनानि च ।।

५—सर्पः किमिति मण्डूकं गङ्गदत्तं कुलाङ्गारमाह ?

६—भक्षणार्थम्, पाषाणचयनिबद्धे, निष्करुणाः—एषु कः समासः कश्च विग्रहः ?

## द्वात्रिंशः पाठः

# महाकाव्ये रघुवंशे संक्षिप्तः प्रथमः सर्गः

वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये ।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ।।१।।

क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः ।
तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम् ।।२।।

मन्दः कवियशःप्रार्थी गमिष्याम्युपहास्यताम् ।
प्रांशुलभ्ये फले लोभादुद्बाहुरिव वामनः ॥३॥

सोऽहमाजन्म - शुद्धानामाफलोदय - कर्मणाम् ।
आसमुद्र - क्षितीशानामानाक - रथ - वर्त्मनाम् ॥४॥

शैशवेऽभ्यस्त - विद्यानां यौवने विषयैषिणाम् ।
वार्धके मुनिवृत्तीनां योगेनान्ते तनुत्यजाम् ॥५॥

रघूणामन्वयं वक्ष्ये तनुवाग्विभवोऽपि सन् ।
तद्गुणैः कर्णमागत्य चापलाय प्रणोदितः ॥६॥

वैवस्वतो मनुर्नाम माननीयो मनीषिणाम् ।
आसीन्महीक्षितामाद्यः प्रणवश्छन्दसामिव ॥७॥

तदन्वये शुद्धिमति प्रसूतः शुद्धिमत्तरः ।
दिलीप इति राजेन्दुरिन्दुः क्षीरनिधाविव ॥८॥

आकारसदृशप्रज्ञः प्रज्ञया सदृशागमः ।
आगमैः सदृशारम्भ आरम्भसदृशोदयः ॥९॥

जुगोपात्मानमत्रस्तो भेजे धर्ममनातुरः ।
अगृध्नुराददे सोऽर्थमसक्तः सुखमन्वभूत् ॥१०॥

ज्ञाने मौनं क्षमा शक्तौ त्यागे श्लाघाविपर्ययः ।
गुणा गुणानुबन्धित्वात्तस्य सप्रसवा इव ॥११॥

दुदोह गां स यज्ञाय सस्याय मघवा दिवम् ।
संपद्विनिमयेनोभौ दधतुर्भुवनद्वयम् ॥१२॥

तस्य दाक्षिण्यरूढेन नाम्ना मगधवंशजा ।
पत्नी सुदक्षिणेत्यासीदध्वरस्येव दक्षिणा ।।१३।।

संतानार्थाय विधये स्वभुजादवतारिता ।
तेन धूर्जगतो गुर्वी सचिवेषु निचिक्षिपे ।।१४।।

अथाभ्यर्च्य विधातारं प्रयतौ पुत्रकाम्यया ।
तौ दंपती वसिष्ठस्य गुरोर्जग्मतुराश्रमम् ।।१५।।

स दुष्प्रापयशाः प्रापदाश्रमं श्रान्तवाहनः ।
सायं संयमिनस्तस्य महर्षेर्महिषीसखः ।।१६।।

अथ यन्तारमादिश्य धुर्यान्विश्रामयेति सः ।
तामवारोहयत्पत्नीं रथादवततार च ।।१७।।

अथातिथ्य-क्रिया-शान्त-रथ-क्षोभ-परिश्रमम् ।
पप्रच्छ कुशलं राज्ये राज्याश्रममुनिं मुनिः ।।१८।।

त्वयैवं चिन्त्यमानस्य गुरुणा ब्रह्मयोनिना ।
सानुबन्धाः कथं न स्युः संपदो मे निरापदः ।।१९।।

किन्तु वध्वां तवैतस्यामदृष्टसदृशप्रजम् ।
न मामवति सद्वीपा रत्नसूरपि मेदिनी ।।२०।।

इति विज्ञापितो राज्ञा ध्यानस्तिमितलोचनः ।
क्षणमात्रमृषिस्तस्थौ सुप्तमीन इव ह्रदः ।।२१।।

सोऽपश्यत्प्रणिधानेन संततेः स्तम्भकारणम् ।
भावितात्मा भुवो भर्तुरथैनं प्रत्यबोधयत् ।।२२।।

पुरा शक्रमुपस्थाय तवोर्वीं प्रति यास्यतः ।
आसीत्कल्पतरुच्छायामाश्रिता सुरभिः पथि ।।२३।।
धर्मलोपभयाद्राज्ञीमृतु - स्नातामिमां स्मरन् ।
प्रदक्षिणक्रियार्हायां तस्यां त्वं साधु नाचरः ।।२४।।
अवजानासि मां यस्मादतस्ते न भविष्यति ।
मत्प्रसूतिमनाराध्य प्रजेति त्वां शशाप सा ।।२५।।
सुतां तदीयां सुरभेः कृत्वा प्रतिनिधिं शुचिः ।
आराधय सपत्नीकः प्रीता कामदुधा हि सा ।।२६।।
वन्यवृत्तिरिमां शश्वदात्मानुगमनेन गाम् ।
विद्याम् अभ्यसनेनैव प्रसादयितुमर्हसि ।।२७।।
प्रस्थितायां प्रतिष्ठेथाः स्थितायां स्थितिमाचर ।
निषण्णायां निषीदास्यां पीताम्भसि पिबेरपः ।।२८।।
तथेति प्रतिजग्राह प्रीतिमान्सपरिग्रहः ।
आदेशं देशकालज्ञः शिष्यः शासितुरानतः ।।२९।।

## प्रश्नाः

१—किमर्थं दिलीपः सुदक्षिणा च वसिष्ठाश्रममुपेतौ ?

२—कालिदासकृत-वर्णनमाश्रित्य राज्ञो दिलीपस्य गुणानां कीर्तनं क्रियताम् ।

३—रघूणामन्वयः कीदृश आसीत् ? तस्य वर्णनं सरलया संस्कृतगिरा क्रियताम् ।

४—अधोनिर्दिष्टेषु पदेषु व्युत्पत्तिं प्रदर्शय—

तितीर्षुः, दुदोह, दधतुः, निचिक्षिपे, प्रापत्, पप्रच्छ, आचरः ।

५—कामदुघा शब्दस्य कोऽर्थः ? कथं चायं व्युत्पद्यते ?

६—वागर्थाविव, उद्बाहुः, आसमुद्र-क्षितीशानाम्, दुष्प्रापयशाः, निरापदः, सपत्नीकः—एषु पदेषु 'समास-विग्रहौ' प्रदर्श्यौ ।

७—एतत्पाठगतानि पद्यान्याश्रित्य 'उपमा कालिदासस्ये' ति विषयकः संक्षिप्तो निबन्धो लिख्यताम् ।

८—आरम्भसदृशप्रज्ञ—इत्यादिपद्ये कोऽलङ्कारः किञ्च तल्लक्षणम् ?

## त्रयस्त्रिंशः पाठः

# द्वात्रिंशत्पुत्तलिका-सिंहासनम्

अथ काले भोजराजः राज्यं प्राप । तस्मिन् राज्यं कुर्वति, एकदा कश्चित् ब्राह्मणो यत्र सिंहासनं निक्षिप्तं तत् क्षेत्रं कृष्ट्वा यवादीन् अवपत् । तस्मिन् क्षेत्रे महत् फलमभूत् । स ब्राह्मणो यत्र तत् सिंहासनं निक्षिप्तं तदुच्चस्थानमिति मत्वा पक्षिणाम् उत्थापनार्थं तदुपरि मंचं कृत्वोपविश्य पक्षिण उत्थापयति ।

तत् एकदा भोजराजो विहारं कर्तुं सकलराजकुमारैः समवेतस्तत्क्षेत्रसमीपं यावद् गच्छति, तावन्मञ्चोपरिस्थितेन ब्राह्मणेनोक्तं—भो राजन् ! एतत् क्षेत्रं सम्यक् फलितमस्ति । ससैन्यः समागत्य यथेच्छं भुज्यताम् अश्वेभ्यश्चणका दीयन्ताम् । अद्य मज्जन्म सफलमभूत्, यतो भवान् ममातिथिर्जातः । ईदृशः प्रस्तावः कदा सम्पद्यते ? तच्छ्रुत्वा स राजा ससैन्यः क्षेत्रमध्ये प्रविष्टः । अथ ब्राह्मणोऽपि मञ्चकादवरुह्य राजानं क्षेत्रमध्यस्थितं भणति—भो राजन् ! किमयमधर्मः क्रियते ? इदं ब्राह्मणक्षेत्रं विनाश्यते त्वया । जनैः यदि अन्यायः क्रियते, प्रतिकारार्थं तुभ्यं निवेद्यते । त्वमेवान्यायं कर्तुं प्रवृत्तः इदानीं को वा निवारयिष्यति ? भवान् धर्मशास्त्राभिज्ञश्च ब्राह्मणद्रव्यं कथं नाशयति ? ब्रह्मस्वमेतत् विषम् । तथाहि—

विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते ।
विषमेकाकिनं हन्ति ब्रह्मस्वं पुत्रपौत्रकम् ॥

इति तेनोक्तं श्रुत्वा राजा यावत् क्षेत्राद् बहिः सपरिवारो निर्गच्छति, तावत् पक्षिणः समुत्थाप्य पुनः मञ्चमारूढो ब्राह्मणो वदति—

"भो राजन् ! किमिति गम्यते ? क्षेत्रं साधु फलितमस्ति, यवान् अश्वादयो भक्षयन्तु, बदरीफलानि सन्ति, उपभुज्यन्ताम्" । पुनर्ब्राह्मणवचनमाकर्ण्य सपरिवारो राजा यावत् क्षेत्रमध्ये प्रविशति, पक्ष्युत्थापनार्थं मञ्चादवरुह्य स पुनस्तथैव अभणत् ।

ततो राजा स्वमनसि विचारयति—अहो आश्चर्यम् ! यदा अयं ब्राह्मणो मञ्चमारोहति, तदास्य चेतसि दातव्यम्, भोक्तव्यम्, इति बुद्धिरुत्पद्यते, यदा अवतरति तदा दीनबुद्धिर्भवति। तदहं मञ्चमारुह्य पश्यामि इति मञ्चमारुरोह। भोजराजस्य चेतसि तदा वासना एवमभूत्—विश्वस्यार्त्तिः परिहरणीया, सर्वस्य लोकस्यापि दारिद्र्यं सम्यग् निवारणीयम्, दुष्टा दण्डनीयाः, सज्जनाः पालनीयाः, प्रजा धर्मेण रक्षणीयाः, किं बहुना—अस्मिन् समये यदि कश्चिच्छरीरमपि प्रार्थयिष्यते, तदपि देयम् इति। आनन्दपरिपूर्णः पुनर्विचारयति—अहो ! मञ्चमस्य एवंविधां बुद्धिमुत्पादयति। कथमेतत्मञ्चस्य माहात्म्यं ज्ञायेत ? इति विचार्य ब्राह्मणमाहूय अवादीत्—भो ब्राह्मण ! तवैतस्मात् क्षेत्रात् कियांल्लाभो भवति ? अहमेतत् क्षेत्रं क्रेतुमिच्छामि। ब्राह्मणेनोक्तम्—भो राजन् ! सकलकलाकुशलेन त्वया अविदितं किमपि नास्ति, यदर्हति तत् करोतु। राजा हि साक्षात् कल्पवृक्षः, स त्वं मम दृष्टिगोचरोऽभूः। अद्य मम दैन्यदारिद्र्यादीनामवसानं जातं क्षेत्रं कियत् ?

ततो राजा ब्राह्मणं धनधान्यादिना परितोष्य, तत् क्षेत्रं गृहीत्वा मञ्चकाधः खानयितुं प्रारम्भमकार्षीत् पुरुषप्रमाणे गर्ते जाते शिलैका सुमनोहरा अवलोकिता। तदधः चन्द्रकान्तशिला-विनिर्मितं, नानारत्नखचितं, द्वात्रिंशत्पुत्तलिकायुक्तम् अतिरमणीयं दिव्यमेकं सिंहासनमपश्यत्। तत्सिंहासनं दृष्ट्वा भोजराजः परमानन्द-लहरीपरिपूर्णहृदयो भूत्वा सिंहासनं ग्रामं प्रति नेतुं याव-

दुच्चालयति, तावत्तदधिकं गुरु भवति नोच्चलति च। ततो मन्त्रिण-मवदत्—भो मन्त्रिन्, किमर्थमेतत् सिंहासनं नोच्चलति ? मन्त्रि-णोक्तम्—राजन् ! एतत् सिंहासनं दिव्यमपूर्वञ्च। बलिहोमपूजा-दिकं विना नोच्चलिष्यति, तव साध्यं च न भविष्यति इति।

तस्य वचनं श्रुत्वा राजा ब्राह्मणान् आहूय, तैः सर्वमपि विधानं कारितवान्। ततस्तत् सिंहासनं लघु भूत्वा स्वयमेवोच्च-लति स्म।

## प्रश्नाः

१—द्वात्रिंशत्पुत्तलिकासिंहासनोपलब्धि-वृत्तान्तः हिन्दीभाषायां लिख्यताम्।

२—मञ्चारोहणावरोहणयोः राज्ञो ब्राह्मणस्य च कथं बुद्धिभेदोऽभूत्, किञ्च तत्र कारणमभवत् ?

३—अधोरेखाङ्कितेषु पदेषु विभक्तिसङ्गतिं दर्शय—

क—इति तेनोक्तं श्रुत्वा राजा यावत् क्षेत्राद् बहिः निर्गच्छति—

ख—भोजराजः सिंहासनं ग्रामं प्रति नेतुं यावदुच्चालयति।

ग—(एतत्) बलिहोमपूजादिकं विना नोच्चलिष्यति।

४—बदरीफलानि कानि भवन्ति ?

५—अधोनिर्दिष्टेषु पदेषु व्याकरणवैशिष्ट्यं प्रदर्शय—

कृष्ट्वा, विनाश्यते, निंद्यते, अवादीत्, आरुरोह।

६—द्वात्रिंशत्पुत्तलिकासिंहासनस्य कीदृशं सौन्दर्यमत्र वर्णितम्। किमिति तत् पूर्वं गुरु सदपि लघु सञ्जातम् ?

७—क्षेत्रमध्ये ब्रह्मस्वम्, दीनबुद्धिः, चन्द्रकान्त-शिलाविनिर्मितम्, आनन्द-लहरी-परिपूर्णहृदयः—एषु पदेषु के समासाः के च तेषां विग्रहाः ?

## चतुस्त्रिंशः पाठः

# स्वभावो दुरतिक्रमः

कस्मिंश्चिद्वनोद्देशे सिंहदम्पती प्रतिवसतः स्म। अथ सिंही पुत्रद्वयमजीजनत्। सिंहोऽपि नित्यमेव मृगान्व्यापाद्य सिंह्यै ददाति। अथ कदाचित्तेन किमपि सत्त्वं नासादितम्। वने भ्रमतोऽपि तस्य रविरस्तङ्गतः। अथ तेन स्वगृहमागच्छता शृगाल-शिशुः प्राप्तः। तं च स बालकोऽयमिति मत्वा यत्नेन दंष्ट्रामध्यगतं कृत्वा सिंह्यै जीवन्तमेव समर्पितवान्। अभिहितवान् च—प्रिये, मयाद्यैनं शृगालशिशुं परित्यज्य न किञ्चित्सत्त्वमासादितम्। एष च मया बालोऽयमिति मत्वा न व्यापादितः। उक्तं च—

स्त्रीलिङ्गिविप्रबालानां प्रहर्तव्यं न कर्हिचित्।
प्राणत्यागेऽपि सञ्जाते विश्वस्तानां विशेषतः ॥१॥

इदानीमेनं भक्षयित्वा पथ्यं कुरु प्रभातेऽन्यदुपार्जयिष्यामि। साह—भोः कान्त ! त्वया बालकोऽयमिति मत्वा न व्यापादितः।

तदहं कथमेनं स्वोदरार्थे व्यापादयामि । उक्तं च—

अकृत्यं नैव कृत्यं स्यात्प्राणत्यागेऽप्युपस्थिते ।
न च कृत्यं परित्याज्यमेष धर्मः सनातनः ॥२॥

तस्मान्ममायं तृतीयः पुत्रो भविष्यति । इत्युक्त्वा तमपि स्वस्तनक्षीरेण पुष्टिमनयत् । एवं ते त्रयोऽपि शिशवः परस्पराज्ञातजातिविशेषा एकत्र विहारिणो बाल्यमतिवाहयन्ति । अथ कदाचित्तत्र वने भ्राम्यन् वनगजो दृष्टः । तं दृष्ट्वा तौ सिंहसुतौ द्वावपि कुपिताननौ तं प्रति प्रचलितौ यावत्तावत्तेन शृगालसुतेनाभिहितम् अहो ! गजोऽयं युष्मत्कुलशत्रुः । तन्न गन्तव्यमेतस्याभिमुखम् । एवमुक्त्वा गृहं प्रधावितः । तावपि ज्येष्ठत्रासान्निरुत्साहतां गतौ. अथवा साध्विदमुच्यते—

एकेनापि सुधीरेण सोत्साहेन रणं प्रति ।
सोत्साहं जायते सैन्यं भग्ने भङ्गमवाप्नुयात् ॥३॥

अत एव हि वाञ्छन्ति भूपा योधान् महाबलान् ।
शूरान् धीरान् कृतोत्साहान् वर्जयन्ति च कातरान् ॥४॥

ततो द्वावपि पित्रोरग्रतो विहसन्तौ ज्येष्ठभ्रातृचेष्टितमूचतुर्यथा गजं दृष्ट्वा दूरतोऽपि नष्टः । सोऽपि तदाकर्ण्य कोपाविष्टः प्रस्फुरिताधरपल्लवस्ताम्रलोचनस्त्रिशिखां भ्रुकुटीं कृत्वा तौ निर्भर्त्सयन् परुषतरवचनान्युवाच । ततः सिंह्यैकान्ते नीत्वा प्रबोधितः—वत्स ! मैवं कदाचिज्जल्प । भवदीयलघुभ्रातरावेतौ । अथासौ प्रभूतकोपा-

विष्टस्तामित्युवाच—किमहमेताभ्यां शौर्येण रूपेण विद्याभ्यासेन वा न्यूनो येन मामुपहसतः । तन्मयावश्यमेतौ व्यापादनीयौ । तदाकर्ण्य सिंही तस्य जीवितमिच्छन्ती प्राह—

शूरोऽसि कृतविद्योऽसि दर्शनीयोऽसि पुत्रक ।
यस्मिन् कुले त्वमुत्पन्नो गजस्तत्र न हन्यते ॥५॥

परं शृगालसुतस्त्वं कृपया मया स्वकीयक्षीरपानेन पुष्टिं नीतः । तद्यावन्नैतौ त्वां शृगालं जानीतस्तावद् द्रुतं गत्वा स्वजातिमध्ये भव । नोचेदाभ्यां हतो मृत्युपथं समेष्यसि । सोऽपि तद्वचनं श्रुत्वा भयव्याकुलमनाः क्षणात्प्रनष्टः ।

(पञ्चतन्त्रात्)

## प्रश्नाः

१—शूरोऽसि कृतविद्योऽसि दर्शनीयोऽसि पुत्रक ।
यस्मिन् कुले त्वमुत्पन्नो गजस्तत्र न हन्यते ॥

इत्येतत्पद्यं प्रकरणनिर्देशपुरस्सरं व्याख्यायताम् ।

२—अधोनिर्दिष्टेषु पदेषु समासविग्रहौ प्रदर्शनीयौ—

प्रधावितः, कृतोत्साहान् प्रस्फुरिताधरपल्लवः, ताम्रलोचनः, त्रिशिखाम् ।

३—'पित्रोः' इत्यस्य कोऽर्थः ?

४—स्त्रीलिङ्गिविप्रबालानां न प्रहर्तव्यं कदाचन—इत्यत्र षष्ठी कुतः ?

५—एषां पदानां हिन्दीभाषायामर्थो लेख्यः—



कोपाविष्टः, व्यापादनीयौ, कृतविद्यः, अतिवाहयन्ति ।

## पञ्चत्रिंशः पाठः

# विदुरनीतिः (ख भागः)

आक्रुश्यमानो नाक्रोशेन्मन्युरेव तितिक्षतः ।
आक्रोष्टारं निदहति सुकृतं चास्य विन्दति ॥१॥

नाक्रोशी स्यान्नावमानी परस्य
मित्रद्रोही नोत नीचोपसेवी ।
न चाभिमानी न च हीनवृत्तो
रूक्षां वाचं रुशतीं वर्जयीत ॥२॥

मर्माण्यस्थीनि हृदयं तथाऽसून्
रूक्षा वाचो निर्दहन्तीह पुंसाम् ।
तस्माद्वाचमुषतीं रूक्षरूपां
धर्मारामो नित्यशो वर्जयीत ॥३॥

अव्याहृतं व्याहृताच्छ्रेय आहुः
सत्यं वदेद् व्याहृतं तद्द्वितीयम् ।
प्रियं वदेद् व्याहृतं तत्तृतीयं
धर्म्यं वदेद्व्याहृतं तच्चतुर्थम् ॥४॥

यादृशैः सन्निविशते यादृशांश्चोपसेवते ।
यादृगिच्छेच्च भवितुं तादृग्भवति पूरुषः ॥५॥

भावमिच्छति सर्वस्य नाभावे कुरुते मनः ।
सत्यवादी मृदुर्दान्तो यः स उत्तमपूरुषः ॥६॥

नानर्थकं सान्त्वयति प्रतिज्ञाय ददाति च ।
रन्ध्रं परस्य जानाति यः स मध्यमपूरुषः ॥७॥
न श्रद्दधाति कल्याणं परेभ्योऽप्यात्मशंकितः ।
निराकरोति मित्राणि यो वै सोऽधमपूरुषः ॥८॥
उत्तमानेव सेवेत प्राप्तकाले तु मध्यमान् ।
अधमांस्तु न सेवेत य इच्छेद् भूतिमात्मनः ॥९॥

धृतराष्ट्र उवाच—

महाकुलेभ्यः स्पृहयन्ति देवा
धर्मार्थनित्याश्च बहुश्रुताश्च ।
पृच्छामि त्वां विदुर ! प्रश्नमेतं
भवन्ति वै कानि महाकुलानि ॥१०॥

विदुर उवाच—

तपो दमो ब्रह्मवित्तं वितानाः
पुण्या विवाहाः सततान्नदानम् ।
येष्वेवैते सप्त गुणा वसन्ति
सम्यग्वृत्तास्तानि महाकुलानि ॥११॥
येषां न वृत्तं व्यथते न योनि-
श्चित्तप्रसादेन चरन्ति धर्मम् ।
ये कीर्तिमिच्छन्ति कुले विशिष्टां
त्यक्तानृतास्तानि महाकुलानि ॥१२॥

अनिज्यया कुविवाहैर्वेदस्योत्सादनेन च ।
कुलान्यकुलतां यान्ति धर्मस्यातिक्रमेण च ॥१३॥
कुलानि समुपेतानि गोभिः पुरुषतोऽर्थतः ।
कुलसंख्यां न गच्छन्ति यानि हीनानि वृत्ततः ॥१४॥
वृत्ततस्त्वविहीनानि कुलान्यल्पधनान्यपि ।
कुलसंख्यां हि गच्छन्ति कर्षन्ति च महद्यशः ॥१५॥
वृत्तं यत्नेन संरक्षेद् वित्तमेति च याति च ।
अक्षीणो वित्ततः क्षीणो वृत्ततस्तु हतो हतः ॥१६॥
गोभिः पशुभिरश्वैश्च कृष्या च सुसमृद्धया ।
कुलानि न प्ररोहन्ति यानि हीनानि वृत्ततः ॥१७॥
मा नः कुले वैरकृत् कश्चिदस्तु
राजाऽमात्यो मा परस्वापहारी ।
मित्रद्रोही नैकृतिकोऽनृती वा
पूर्वाशी वा पितृदेवातिथिभ्यः ॥१८॥
तृणानि भूमिरुदकं वाक् चतुर्थी च सूनृता ।
सतामेतानि गेहेषु नोच्छिद्यन्ते कदाचन ॥१९॥
न तन्मित्रं यस्य कोपाद् बिभेति
यद्वा मित्रं शंकितेनोपचर्यम् ।
यस्मिन् मित्रे पितरीवाश्वसीत
तद्वै मित्रं संगतानीतराणि ॥२०॥

य: कश्चिदप्यसंबद्धो मित्रभावेन वर्तते ।
स एव बन्धुस्तन्मित्रं सा गतिस्तत्परायणम् ॥२१॥

चलच्चित्तस्य वै पुंसो वृद्धाननुपसेवतः ।
पारिप्लवमतेर्नित्यमध्रुवो मित्रसंग्रहः ॥२२॥

सत्कृताश्च कृतार्थाश्च मित्राणां न भवन्ति ये ।
तान् मृतानपि क्रव्यादाः कृतघ्नान्नोपभुञ्जते ॥२३॥

अर्चयेदेव मित्राणि सति वाऽसति वा धने ।
नानर्चयन् प्रजानाति मित्राणां सारफल्गुताम् ॥२४॥

सन्तापाद् भ्रश्यते रूपं सन्तापाद् भ्रश्यते बलम् ।
सन्तापाद् भ्रश्यते ज्ञानं सन्तापाद् व्याधिमृच्छति ॥२५॥

पुनर्नरो म्रियते जायते च
पुनर्नरो हीयते वर्धते च ।
पुनर्नरो याचति याच्यते च
पुनर्नरः शोचति शोच्यते च ॥२६॥

सुखं च दुःखं च भवाभवौ च
लाभालाभौ मरणं जीवितं च ।
पर्यायशः सर्वमेते स्पृशन्ति
तस्माद् धीरो न च हृष्येन्न शोचेत् ॥२७॥

चलानि हीमानि षडिन्द्रियाणि
तेषां यद् यद् वर्धते यत्र यत्र ।

ततस्ततः स्रवते बुद्धिरस्य
छिद्रोदकुम्भादिव नित्यमम्भः ॥२८॥

अभ्यासः—अस्मिन् पाठे कानिचन पञ्च पद्यानि कण्ठे कुरु ।

प्रश्नाः

१—विदुरनीतौ वृत्तस्य कीदृशं माहात्म्यं प्रतिपादितम् ? वृत्त-माहात्म्य-प्रख्यापकं कञ्चन अन्यं श्लोकमप्युदाहर ।

२—सतां गेहे कानि चत्वारि वस्तूनि नोच्छिद्यन्ते ? तानि नामतो निर्दिश ।

३—विदुरानुसारेण उत्तममध्यमाधमपूरुषाणां लक्षणानि देयानि ।

४—अधोनिर्दिष्टेषु पदेषु प्रकृतिप्रत्यय-प्रविभागं प्रदर्शय—
आक्रुश्यमानः, अनिज्यया, उच्छिद्यन्ते, आश्वसीत, ऋच्छति, ।

५—प्राप्तकाले बहुश्रुताः सम्यग्वृत्ताः, परस्वापहारी, मित्रद्रोही—एषु पदेषु कः समासः ?

## षट्त्रिंशः पाठः

# "उद्धरेदात्मनात्मानम्"

विदितमेव शीर्षकभूतमेतद् भगवतो वचनं सर्वेषाम् । अत्र किल यत्र कुत्रापि विपदि निमग्नमात्मानमात्मनैव समुद्धरेन्न तु तत्रापरेषां साहाय्यमपेक्षेतेति प्रतिपाद्यते । युक्तं चैतत् । तथाहि, विरलाः किल विपदि साहाय्यस्याधातारः । सर्वेऽपि खलु सम्पदि

बन्धुतां प्रकटीकुर्वन्ति । समुपस्थितायां पुनर्विपदि नैव भवति कोऽपि कस्यापि सहायो नाम । प्रत्युत सुहृदोऽपि विद्वेषिण इव सम्पद्यन्ते । तदेतदुक्तं कविना शूद्रकेणापि—

'परोऽपि बन्धुः समसंस्थितस्य
मित्रं न कश्चिद्विषमस्थितस्य' इति ।

अपरेऽपि प्राहुः—

'वनानि दहतो वह्नेः सखा भवति मारुतः ।
स एव दीपनाशाय कृशे कस्यास्ति सौहृदम्' ॥ इति ।

अतो विपन्नेन स्वयमेवात्मा समुद्धरणीयो भवति । यदि पुनः सोऽयं विपद्यपि साहाय्याप्त्यर्थं परमुखं प्रेक्षेत, नात्मानमुद्धरेत् तदा तु भूयस्यां विपदि निमज्जेत् । अत एवोक्तं भगवता श्रीकृष्णेन गीतायाम् 'उद्धरेदात्मनात्मानम्' इति ।

इह खलु जगति प्रत्युपकारापेक्षयैव परोपकारप्रवृत्तिः प्रायेण सर्वेषां सन्दृश्यते । सौरभस्य फलस्यापि वा प्रत्याशया तरवः प्रोक्ष्यन्ते । पयसः कृते गावः परिपाल्यन्ते । आत्मनः साहाय्यमाचरिष्यन्तीति सुहृत्सु सौहार्दमाविष्क्रियते । चिराय किल परिपालयिष्यतीति भृत्यैरपि प्रभुः संसेव्यते । किमधिकम् । ये किलात्मनिर्विशेषं वात्सल्याभ्यधिकं परिपाल्यन्ते पुत्राः पित्रादिभिस्तत्रापि ननु प्रत्युपकारापेक्षैव प्रधानं निदानमित्यत्र नास्ति सन्देहः । पुत्रा मम वार्द्धके साहाय्यमाचरिष्यन्ति प्रदास्यन्ति च निवापोदकं परस्तादित्येवमभिसन्धायैव तेषु पित्रादयः समधिकं

स्निह्यन्ति । यतः पुनर्नास्ति प्रत्युपकारप्रत्याशा नैवासौ तस्मिन् सविशेषं स्निह्यतीति सामान्योऽयं लौकिकानां प्रवृत्तिनियमः ।

अत एव पदे पदे भिक्षार्थमटन्तो भूयांसः पुरुषाः प्रायेण सर्वैरप्यनाद्रियमाणाः सन्दृश्यन्ते । एतावता पुनरेतदेव पर्यवस्यति यद्यस्मात्किल नास्ति प्रत्युपकारप्रत्याशा तेन खलु स्वयमेवात्मा समुद्धरणीयो भवतीति । अत एवोक्तं भगवता 'उद्धरेदात्मनात्मानम्' इति ।

—(सूनृतवादिनीपत्रिकातः)

**प्रश्नाः**

१—इह जगति प्रत्युपकारापेक्षयैव परोपकारप्रवृत्तिर्लक्ष्यत इत्यत्र को दृष्टान्तो दत्तो मूले ?

२—कृशे कस्यास्ति सौहृदमिति विषयमवलम्ब्य नातिदीर्घो निबन्धो विरच्यताम् ।

३—अधोनिर्दिष्टेषु पदेषु प्रकृति-प्रत्ययौ तदर्थं चोपदर्शय—

प्रतिपाद्यते, सौहृदम्, प्रोक्ष्यन्ते, अनाद्रियमाणाः, पर्यवस्यति ।

४—निवापोदकं किं भवति ?

## सप्तत्रिंशः पाठः

# स्वामिभक्तिः

अथ वीरवरो नाम राजपुत्रः कुतश्चिद्देशादागत्य राजद्वारमुपगम्य प्रतीहारमुवाच—अहं तावद्वर्तनार्थी राजपुत्रः, मां

राजदर्शनं कारय । ततस्तेनासौ राजदर्शनं कारितो ब्रूते—देव, यदि मया सेवकेन प्रयोजनमस्ति तदास्मद्वर्तनं क्रियताम् ।

शूद्रक उवाच—किं ते वर्तनम् ?

वीरवरो ब्रूते—प्रत्यहं सुवर्णचतुष्टयम् ।

राजाह—का ते सामग्री ?

वीरवरो ब्रूते—द्वौ बाहू तृतीयश्च खड्गः ।

राजाह—नैतच्छक्यम् ।

तच्छ्रुत्वा वीरवरः प्रणम्य चलितः । अथ मन्त्रिभिरुक्तम्—देव, दिनचतुष्टयस्य वर्तनं दत्त्वा ज्ञायतामस्य स्वरूपम् । किमुपयुक्तोऽयमेतावद्वर्तनं गृह्णात्यनुपयुक्तो वेति । ततो मन्त्रिवचनादाहूय स वीरवरो नियुक्तः । वर्तनस्यार्धं वीरवरेण देवेभ्यो ब्राह्मणेभ्यश्च दत्तम् । स्थितस्यार्धं दुःखितेभ्यः । तदवशिष्टं भोज्यव्ययविलासव्ययेन व्ययितम् । एतत्सर्वं नित्यकृत्यं कृत्वा राजद्वारमहर्निशं खड्गपाणिः सेवते । यदा च राजा स्वयं समादिशति तदा स्वगृहमपि याति ।

अथैकदा कृष्णचतुर्दश्यां रात्रौ राजा सकरुणं क्रन्दनध्वनिं शुश्राव ।

शूद्रक उवाच—कः कोऽत्र द्वारि ?

तेनोक्तम्—देव, अहं वीरवरः ।

राजोवाच—क्रन्दनानुसरणं क्रियताम् ।

वीरवरो 'यथाज्ञापयति देव' इत्युक्त्वा चलितः । राज्ञा च

चिन्तितम्—नैतदुचितम् यदयमेकाकी राजपुत्रो मया सूचीभेद्ये तमसि प्रेरितः। तदनु गत्वा किमेतदिति निरूपयामि। ततो राजापि खड्गमादाय तदनुसरणक्रमेण नगराद् बहिर्निर्जगाम। गत्वा च वीरवरेण रुदती रूपयौवनसम्पन्ना सर्वालङ्कारभूषिता काचित् स्त्री दृष्टा पृष्टा च—का त्वम् किमर्थं रोदिषीति। स्त्रियोक्तम्—अहमेतस्य शूद्रकस्य राज्ञो लक्ष्मीः। चिरादेतस्य भुजच्छायायां महता सुखेन विश्रान्ता। इदानीमन्यत्र गमिष्यामि। वीरवरो ब्रूते—यत्रापायः सम्भवति तत्रोपायोऽप्यस्ति। तत्कथं स्यात् पुनरिहावलम्बनं भगवत्याः? लक्ष्मीरुवाच—यदि त्वमात्मनः पुत्रं शक्तिधरं द्वात्रिंशल्लक्षणोपेतं भगवत्याः सर्वमंगलाया उपहारीकरोषि तदाहं पुनरत्र सुचिरं सुखं निवत्स्यामि। इत्युक्त्वादृश्याभवत्।

ततो वीरवरेण स्वगृह गत्वा निद्राणा स्ववधूः प्रबोधिता पुत्रश्च। तौ निद्रां परित्यज्योत्थायोपविष्टौ। वीरवरस्तत्सर्वं लक्ष्मीवचनमुक्तवान्। तच्छ्रुत्वा सानन्दः शक्तिधरो ब्रूते—धन्योऽहमेवम्भूतः स्वामिराज्यरक्षार्थं यस्योपयोगः। तत्तात, कोऽधुना विलम्बस्य हेतुः? कदापि तावदेवंविध एव कर्मण्येतस्य देहस्य विनियोगः श्लाघ्यः। यतः—

धनानि जीवितं चैव परार्थे प्राज्ञ उत्सृजेत्।
सन्निमित्ते वरं त्यागो विनाशे नियते सति ॥१॥

शक्तिधरमातोवाच—यद्येतन्न कर्तव्यं तत्केनान्येम कर्मणा-

मुख्यस्य महावर्तनस्य निष्क्रयो भविष्यति। इत्यालोच्य सर्वे सर्वमङ्गलायाः स्थानं गताः। तत्र सर्वमङ्गलां संपूज्य वीरवरो ब्रूते—देवि, प्रसीद। विजयतां विजयतां शूद्रको महाराजः। गृह्यतामयमुपहारः। इत्युक्त्वा पुत्रस्य शिरश्चिच्छेद। ततो वीरवरश्चिन्तयामास, गृहीतराजवर्तनस्य तावन्निस्तारः कृतः। अधुना निष्पुत्रस्य जीवनं विडम्बनम्। इत्यालोच्यात्मनः शिरश्छिन्नवान्। ततो स्त्रियापि स्वामिनः पुत्रस्य च शोकार्तया तदनुष्ठितम्। एतत्सर्वं श्रुत्वा दृष्ट्वा च स राजा साश्चर्यं चिन्तयामास।

जीवन्ति च म्रियन्ते च मद्विधाः क्षुद्रजन्तवः।
अनेन सदृशो लोके न भूतो न भविष्यति ।।२।।

तदेतत्परित्यक्तेन मम राज्येनापि किं प्रयोजनम्। ततः स्वशिरश्छेत्तुमुल्लासितः खड्गः शूद्रकेणापि। अथ भगवत्या सर्वमङ्गलया प्रत्यक्षभूतया राजा हस्ते धृत उक्तश्च—पुत्रक! प्रसन्नास्मि ते। एतावता साहसेनालम्। जीवनान्तेऽपि तव राज्यभङ्गो नास्ति। राजा च साष्टाङ्गपातं प्रणम्योवाच—देवि, किं मे राज्येन जीवितेन वा किं प्रयोजनम्? यद्यहमनुकम्पनीयस्तदा ममायुः शेषेणायं सदारपुत्रो वीरवरो जीवतु। अन्यथाहं यथाप्राप्तां गतिं गच्छामि। भगवत्युवाच—पुत्र, अनेन ते सत्त्वोत्कर्षेण भृत्यवात्सल्येन च सर्वथा सन्तुष्टास्मि। गच्छ विजयी भव। अयमपि सपरिवारो राजपुत्रो जीवतु। इत्युक्त्वा देव्यदृश्याभवत्। ततो वीरवरः सपुत्रदारः प्राप्तजीवनः स्वगृहं गतः।

राजापि तैरलक्षितः सत्वरं प्रासादगर्भं गत्वा तत्रैव सुप्तः।

अथ वीरवरो द्वारस्थः पुनर्भूपालेन पृष्टः सन्नुवाच—देव, सा रुदती स्त्री मामवलोक्यादृश्याभवत्। न काप्यन्या वार्ता विद्यते। तद्वचनमाकर्ण्य सन्तुष्टो राजा साश्चर्यमचिन्तयत्, कथमयं न श्लाघ्यो महासत्त्वः। यतः—

प्रियं ब्रूयादकृपणः शूरः स्यादविकत्थनः।
दाता नापात्रवर्षी च प्रगल्भः स्यादनिष्ठुरः ॥३॥

एतन्महापुरुषलक्षणमेतस्मिन् सर्वमस्ति। ततः स राजा प्रातः शिष्टसभां कृत्वा सर्ववृत्तान्तं प्रस्तुत्य प्रसादात्तस्मै कर्णाटराज्यं ददौ।

(हितोपदेशात्)

## प्रश्नाः

१—अस्याः कथायाः संक्षेपः हिन्दीभाषयाऽनुवाद्यः।

२—जीवन्ति च म्रियन्ते च मद्विधाः क्षुद्रजन्तवः।
अनेन सदृशो लोके न भूतो न भविष्यति ॥
पद्यमेतत्प्रकरणनिर्देशपुरस्सरं व्याख्यायताम्।

३—वीरवरेण कथं स्वामिभक्तिः प्रदर्शिता ?

४—अधोलिखितेषु वाक्येषु उचितपददानेन रिक्तानि स्थानानि पूरय—

(क) अथैकदा कृष्णचतुर्दश्यां रात्रौ……क्रन्दनध्वनिं शुश्राव।

(ख) ततो वीरवरेण स्वगृहं गत्वा निद्राणा……प्रबोधिता।

ग—भगवत्युवाच—अनेन ते····· सन्तुष्टास्मि ।

५—वीरवरः सुवर्णचतुष्टयं कथं व्यययति स्म ।

६—भुजच्छायायाम्, द्वात्रिंशल्लक्षणोपेतम्, क्षुद्रजन्तवः, यथाप्राप्ताम्, सपुत्रदारः—एषु पदेषु के समासाः, के च तेषां विग्रहाः ?

## अष्टात्रिंशः पाठः

# हेमन्तवर्णनम्

उटजे वसतस्तस्य राघवस्य महात्मनः ।
शरद्व्यपाये हेमन्त ऋतुरिष्टः समागतः ॥१॥
स कदाचित् प्रभातायां शर्वर्यां रघुनन्दनः ।
प्रययावभिषेकार्थं रम्यां गोदावरीं नदीम् ॥२॥
प्रह्वः कलशहस्तस्तु सीतया सह वीर्यवान् ।
पृष्ठतोऽनुव्रजन् भ्राता सौमित्रिरिदमब्रवीत् ॥३॥
अयं स कालः सम्प्राप्तः प्रियो यस्ते प्रियंवद ।
अलङ्कृत इवाभाति येन संवत्सरः शुभः ॥४॥
नीहारपरुषो लोकः पृथिवी सस्यमालिनी ।
जलान्यनुपभोग्यानि सुभगो हव्यवाहनः ॥५॥

प्राज्यकामा जनपदाः सम्पन्नतरगोरसाः ।
विचरन्ति महीपाला यात्रार्थं विजिगीषवः ॥६॥
सेवमाने दिशं सूर्ये दृढमन्तकसेविताम् ।
विहीनतिलकेव स्त्री नोत्तरा दिक् प्रकाशते ॥७॥
प्रकृत्या हिमकोषाढ्यो दूरसूर्यश्च साम्प्रतम् ।
यथार्थनामा सुव्यक्तं हिमवान् हिमवान् गिरिः ॥८॥
अत्यन्तसुखसञ्चारा मध्याह्ने स्पृशतः सुखाः ।
दिवसाः सुभगादित्याश्छायासलिलदुर्भगाः ॥९॥
मृदुसूर्याः सुनीहाराः पटुशीताः समाहिताः ।
शून्यारण्या हिमध्वस्ता दिवसा भान्ति साम्प्रतम् ॥१०॥
निवृत्ताकाशशयनाः पुष्यनीता हिमारुणाः ।
शीतवृद्धतरायामास्त्रियामा यान्ति सांप्रतम् ॥११॥
रविसङ्क्रान्तसौभाग्यस्तुषारारुण-मण्डलः ।
निश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते ॥१२॥
ज्योत्स्ना तुषारमलिना पौर्णमास्यां न राजते ।
सीतेव चातपश्यामा लक्ष्यते न च शोभते ॥१३॥
प्रकृत्या शीतलस्पर्शो हिमवृद्धश्च साम्प्रतम् ।
प्रवाति पश्चिमो वायुः काले द्विगुणशीतलः ॥१४॥
वाष्पच्छन्नान्यरण्यानि यवगोधूमवन्ति च ।
शोभन्तेऽभ्युदिते सूर्ये नदद्भिः क्रौञ्चसारसैः ॥१५॥

खर्जूरपुष्पाकृतिभिः शिरोभिः पूर्णतण्डुलैः ।
शोभन्ते किञ्चिदालम्बाः शालयः कनकप्रभाः ॥१६॥
अवश्यायनिपातेन किञ्चित् प्रक्लिन्नशाद्वला ।
वनानां शोभते भूमिर्निविष्टतरुणातपा ॥१७॥
स्पृशन् सुविपुलं शीतमुदकं द्विरदः सुखम् ।
अत्यन्ततृषितो वन्यः प्रतिसंहरते करम् ॥१८॥
एते हि समुपासीना विहगाः जलचारिणः ।
न गाहन्ते जलं स्वच्छमप्रगल्भा इवाहवम् ॥१९॥
अवश्याय - तमोनद्धा नीहार - तमसावृताः ।
प्रसुप्ता इव लक्ष्यन्ते विपुष्पा वनराजयः ॥२०॥
वाष्प - संच्छन्न -सलिला रुत-विज्ञेय-सारसाः ।
हिमार्द्रबालुकैस्तीरैः सरितो भान्ति साम्प्रतम् ॥२१॥
तुषारपतनाच्चैव मृदुत्वाद् भास्करस्य च ।
शैत्यादगाग्रस्थमपि प्रायेण रसवज्जलम् ॥२२॥
जराजर्जरितैः पत्रैः शीर्णकेसरकर्णिकैः ।
नालशेषा हिमध्वस्ता न भान्ति कमलाकराः ॥२३॥

—(वाल्मीकिरामायणात्)

## प्रश्नाः

१—वाल्मीकिकृतहेमन्तवर्णनं स्वकीयया संस्कृतगिराऽनूद्य लिख ।

२—किमिति वाल्मीकिः आदिकविरित्युच्यते ? तस्य काव्यशैलीं निरूपय ।

३—"वाल्मीकेरुपमाः सदा निरुपमा" इति प्राचीनकविभरोति प्रमाण-
यितुं काश्चन उपमाः प्रदर्शय, तासां च चमत्कारविशेषम् उद्भावय ।

४—प्रकृत्या हिमकोषाढ्य इत्यत्र तृतीया कथम् ?

५—अधोनिर्दिष्टानां पदानां हिन्दीभाषायामर्थं लिख—

अभिषेकार्थम्, हव्यवाहनः, विजिगीषवः, समाहितः, आदर्शः शालयः,
प्रतिसंहरते ।

६—एषु पदेषु सन्धिच्छेदो विधेयः—

हेमन्तऋतुः सौमित्रिरिदम्, पश्चिमो वायुः रसवज्जलम् ।

७—किमेषां वाच्यम् ?

क—हिमध्वस्ताः दिवसाः ।

ख—अन्तकसेविता दिक् ।

ग—निश्वासान्ध आदर्शः ।

८—यात्रार्थम्, विहीनतिलका, मृदुसूर्याः, सुनीहाराः, तुषारमलिना, किञ्चि-
दालम्बाः, वाष्पसंच्छन्नसलिलाः—एषु पदेषु समासविग्रहौ प्रदर्श्यौ ।

## एकोनचत्वारिंशः पाठः

# सद्वृत्तम्

**तत्रेन्द्रियाणां समनस्कानामनुपतप्तानामनुपतापाय प्रकृतिभावे प्रयतितव्यम् एभिर्हेतुभिः, तद्यथा—सात्म्येन्द्रियार्थ-संयोगेन बुद्ध्या सम्यगवेक्ष्यावेक्ष्य कर्मणां सम्यक् प्रतिपादनेन देशकालात्मगुण-विपरीतोपासनेन चेति, तस्मादात्महितं चिकीर्षता सर्वेण सर्वं**

स्मृतिमास्थाय सद्वृत्तमनुष्ठेयम् ।

तद्ध्यनुतिष्ठन् युगपत्सम्पादयत्यर्थद्वयम्—आरोग्यम् इन्द्रिय-विजयं चेति । तद्वृत्तमखिलेनोपदेक्ष्यामोऽग्निवेश ! देव-गोब्राह्मण-गुरु-वृद्ध-सिद्धाचार्यान् अर्चयेत्, अग्निमुपचरेत्, ओषधीः प्रशस्ता धारयेत् द्वौ कालावुपस्पृशेत्, मलायनेष्वभीक्ष्णं पादयोश्च वैमल्य-मादध्यात्, त्रिः पक्षस्य केश-श्मश्रु-लोम-नखान्संहारयेत्, नित्यमनु-पहतवासाः सुमनाः सुगन्धिः स्यात् साधुवेशः, प्रसिद्धकेशः, मूर्ध-श्रोत्र-घ्राण-पाद-तैल-नित्यः, पूर्वाभिभाषी, अतिथीनां पूजकः, काले हितमितमधुरार्थवादी, वश्यात्मा, धर्मात्मा, हेतावीर्षुः, फले नेर्षुः, निश्चितः, निर्भीकः, ह्रीमान् धीमान्, आस्तिकः, विनयबुद्धिविद्या-भिजनवयोवृद्ध-सिद्धाचार्याणामुपासिता, प्राक् श्रमाद् व्यायामवर्जी स्यात् । क्रुद्धानामनुनेता, भीतानामाश्वासयिता, दीनानामभ्युपपत्ता सत्यसन्धः, पर-परुष-वचन-सहिष्णुः, रागद्वेष-हेतूनां हन्ता ।

नानृतं ब्रूयान्नान्यस्वमाददीत, नान्यस्त्रियमभिलषेन्नान्य-श्रियम्, न वैरं रोचयेत्, न कुर्यात्पापम्, न पापेऽपि पापी स्यात्, नान्य-दोषान् ब्रूयात्, नान्य-रहस्यमागमयेत्, नाधार्मिकैः सहासीत । नानावृत-मुखो जृम्भां क्षवथुं हास्यं वा प्रवर्तयेत्, न नासिकां कुष्णीयात्, न दन्तान्विघट्टयेत्, न नखान् वादयेत्, न भूमिं विलिखेत्, न छिन्द्यात् तृणम्, न लोष्टं मृद्नीयात् न विगुणमङ्गै-श्चेष्टेत ।

नातिसमयं जह्यात् । न नियमं भिन्द्यात् । न नक्तं नादेशे चरेत् ।

न सन्ध्यास्वभ्यवहाराध्ययन-स्वप्नसेवी स्यात् । न बालवृद्धलुब्ध-मूर्ख-क्लिष्ट-क्लीबैः सख्यं कुर्यात् । न मद्य-द्यूत-प्रसन्नरुचिः स्यात् । न गुह्यं विवृणुयात् । न कञ्चिदवजानीयात् । नाहंमानी स्यात् । नादक्षो, नादक्षिणो, नासूयकः, न ब्राह्मणान् परिवदेत् । न वृद्धान्, न गुरून्, न गणान्, न नृपान् वाऽधिक्षिपेत् । न चातिब्रूयात् न बान्धवानुरक्त-कृच्छ्र-द्वितीय-गुह्यज्ञान् बहिष्कुर्यात् ।

न कार्य-कालमतिपातयेत् । नापरीक्षितमभिनिविशेत् । नेन्द्रिय-वशगः स्यात् । न चञ्चलं मनोभ्रामयेत् । न बुद्धीन्द्रियाणामति-भारमादध्यात् । न चातिदीर्घसूत्री स्यात् । न क्रोध-हर्षावनुविद-ध्यात् । न शोकमनुवसेत् । न सिद्धावुत्सेकं गच्छेन्नासिद्धौ दैन्यम् ।

## प्रश्नाः

१—कथय केनेदं सद्वृत्तं कस्मा उपदिष्टं किमर्थं च ?

२—सर्वमिदं सद्वृत्तानुशासनं स्वेन संस्कृतेन संक्षिप्य वर्णय ।

३—न पापेऽपि पापी स्याद् इत्यस्य कोऽभिप्रायः ?

४—गुरोश्च आचार्यस्य च को विशेषः ?

५—हेतावीर्षुः फलेनेर्षुः इत्यस्य किं तात्पर्यमिति विशदं कथय ।

६—समनस्कानाम्, सुगन्धिः, अनुपहतवासाः, व्यायामवर्जी, कृच्छ्रद्वितीयः, मूर्धश्रोत्रघ्राणपादतैलनित्यः, सत्यसन्धः, परपरुषवचनसहिष्णुः—

इति समस्तानि पदानि विग्रहप्रदर्शनपूर्वकं नामतो निर्दिश ।

७—जह्यात्, छिन्द्यात्, कुष्णीयात् अभिनिविशेत, आददीत, आगमयेत्, मृद्नीयात्, इत्येतेषां तिङन्तानां प्रकृतिप्रत्ययौ दर्शयित्वालंकारं निर्दिश ।

८—जृम्भा, क्षवथुः नक्तम्, ह्रीमान्, निर्भीकः प्रसिद्धकेशः अनुपतप्तानाम्, विवृणुयात्, सुमनाः—इत्येषां पदानामर्थान् लिख ।

९—अत्र सन्दर्भे यत्र प्रयोगेषूपसर्गकृतमर्थान्तरं विशेषं च तन्निर्ब्रूहि ।

१०—आस्तिकः, चिकीर्षता, आरोग्यम्, सख्यम्, ओषधीः, वैमल्यम्, पूर्वाभिभाषी—इत्येतेषां शब्दानां व्याकरणप्रक्रियां संक्षिप्तां कथय ।

११—ओषधि-शब्दस्य औषधशब्दस्य चार्थे को विशेषः ?

४२—दन्तविघट्टन-नखवादनादि-चेष्टानां निषेधे कोऽभिप्रायश्चरकस्य महामुनेः ?

१३—एषु रेखाङ्कितेषु पदेषु विभक्तेर्युक्ततां दर्शय—

न शोकमनुवसेत्, न बुद्धीन्द्रियाणामतिभारमादध्यात्, त्रिःपक्षस्य, न वैरं रोचयेत्, न बालवृद्धलुब्धमूर्खक्लिष्टक्लीबैः सख्यं कुर्यात्, नापरीक्षितम्, अभिनिविशेत ।

## चत्वारिंशः पाठः

# अन्योक्तयः

सूर्यान्योक्तयः—

खद्योतो द्योतते तावद् यावन्नोदयते शशी।
उदिते तु सहस्रांशौ न खद्योतो न चन्द्रमाः ॥१॥

अजस्रं लसत् पद्मिनीवृन्दसङ्गं
मधूनि प्रकामं पिबन्तं मिलिन्दम्।
रविर्मोचयत्यब्जकारागृहेभ्यो
दयालुर्हि नो दुष्टवद्दोषदर्शी ॥२॥

पततु नभसो गच्छत्वस्तं निमज्जतु वारिधौ
व्रजतु वरुणागारद्वारं प्रभाभिरनाहतः।
तदपि तरणिर्दत्त्वा पादं शिरस्सु महीभृतां
दलिततिमिर-व्रातः प्रातः पुनः सकृदेष्यति ॥३॥

दूरं यान्तु निशाचराः शशिकराः क्लेशं लभन्तान्तरा-
मुद्द्योतं कलयन्तु हन्त न चिरं खद्योतका द्योतले।
ध्वान्तं ध्वंसमुपैतु हंसनिवहः पद्माकरे शाम्यतु
प्राचीपर्वतमौलिमण्डनमणिः सूर्यः समुज्जृम्भते ॥४॥

चन्द्रान्योक्तयः—

क्षीणः क्षीणः समीपत्वं पूर्णः पूर्णोऽतिदूरताम्।
उपैति मित्राद्यच्चन्द्रो युक्तं तन्मलिनात्मनः ॥५॥

वक्रोऽस्तु बाल्ये तदनु प्रवृद्धः
कलङ्कवानस्तु जडोऽस्तु चन्द्रः ।
महेशमौलौ च पदं दधातु
जायेत वन्द्यो विबुधोपकारात् ॥६॥

जन्म-क्षीरमहार्णवे सहभुवः श्रीपारिजातादयो
बिम्बं यस्य सुधामयं त्रिभुवनाधीशस्य मूर्ध्नि स्थितम् ।
इत्थं सर्वचराचर-प्रियकरो तस्योदये चेद्भवेत्
सङ्कोचः कमलस्य दुष्कृतिरसौ निन्द्यो न ताराधिपः ॥७॥

मेघान्योक्तिः—

गर्जन्नम्बु ददाति तन्न कणिकारूपेण यत्र क्वचिद्
वर्षाकालमपेक्ष्य दानसमये कार्ष्ण्यं विधत्ते मुखे ।
पश्चात्पाण्डुरतामुपैति लघुतामप्येति भूयस्ततः
श्रीमद्रामनृपाल शेखरविभो दाता कियान् वारिदः ॥८॥

सागरान्योक्तिः

स्वस्त्यस्तु विद्रुमवनाय नमो मणिभ्यः
कल्याणिनी भवतु मौक्तिक-शुक्तिमाला ।
प्राप्तं मया सकलमेव फलं पयोधे-
र्यद्दारुणैर्ज विदारितोऽस्मि ॥६॥

सिंहान्योक्तिः—

गम्यते यदि मृगेन्द्र-मन्दिरे
लभ्यते करि-कपोल-मौक्तिकम् ।

जम्बुकालय-गतेन लभ्यते
वत्सपुच्छखुरचर्मखण्डनम् ॥१०॥

एष क्रीडति शूकरश्च स्वनति द्वीपी च गर्वायते
क्रोष्टा क्रन्दति वल्गते च शशको वेगाद् रुरुर्धावति ।
निःशङ्कः करिपोतकस्तरुलतामुन्मोटते लीलया
हंहो सिंह ! विना त्वयाद्य विपिने कीदृग् दशा वर्तते ॥११॥

गजान्योक्तिः—

पीतं यत्र हिमं कवलिता यस्मिन्मृणालांकुरा-
स्तापार्तेन निमज्ज्य यत्र सरसो मध्ये विमुक्तः श्रमः ।
धिक् तस्यैव जलानि पङ्किलयतः पाथोजिनीं मथ्नतो
मूलान्युत्खनतः करीन्द्र ! भवतो लज्जापि नो जायते ॥१२॥

वृक्षान्योक्तिः—

छायाभिः प्रथमं ततस्तु कुसुमैः पश्चाद् फलैः स्वादुभिः
प्रीणात्येव तरुः पथीति पथिकैः श्रान्तैः सुखं स्थीयते ।
को जानाति यदत्र कोटरगतः प्रत्यग्रहालाहल-
ज्वाला-जाल-कराल-वक्त्र-कुहरः कृष्णः फणी वर्तते ॥१३॥

### प्रश्नाः

१—अन्योक्तयः का भवन्ति ? किं तासां लक्षणम् ? किमिति ताः समाश्रयन्ति कवयः ?

२—खद्योतो द्योतते यावत् इत्यादिश्लोकः कमुद्दिश्य उच्यते ? कोऽस्याभिप्रायः ?

३—अधोनिर्दिष्टाः शब्दाः स्ववाक्येषु प्रयोज्याः—

दयालुः, ध्वान्तम्, वारिदः, फणी, उन्मोटते, तरणिः ।

४—"स्वस्त्यस्तु विद्रुमवनाय, नमो मणिभ्यः" इत्यत्र चतुर्थी कथम् ?

५—'प्रत्यग्र-हालाहल-ज्वाला-जाल-कराल-वक्त्र-कुहरः' इति समासो विगृह्यताम् ।

६—सिंहेन विना विपिने कीदृशी दशा वर्तत इति तस्या वर्णनं संक्षेपेण कुरु ।

७—अधोनिर्दिष्टेषु पदेषु व्याकरण-प्रक्रियां प्रदर्शय—

एष्यति, निमज्ज्य, स्थीयते, मथ्नतः ।

## एकचत्वारिंशः पाठः

# वाराणस्यां हिन्दुविश्वविद्यालस्थापनावसरे महात्मनो गान्धिनो भाषणम्

अयि श्रोतृमहाभागाः—

इह भव्यायां भुवि पवित्रायामस्यां पुरि स्वदेशजानां पुरस्तादवस्थाय देशान्तरीयवाक्प्रयोगो ह्लेपण इति मां प्रतिभाति। यैरत्र वक्तृभिरांगली वाक् प्रायोजि तेषामभिप्रेतं कियद्भिर्जनैरबोधीति यदि परीक्षये तर्हि स्वल्पा एव अबोधिषत इत्युपलप्स्यते ।

इदमपरमवधेयम् । ह्यः सभापतिना नरेशेनैकेन भारतवर्षस्य दारिद्र्यमुपवर्णितम् । इतरैरपि कैश्चित् स्वभणितिभिस्तदुपवर्णना-ऽनुमोदिता । परं यस्मिन्नुज्ज्वले श्रीमति मण्डपे राजप्रतिनिधिना-ऽऽधारशिला स्थापिता, तत्र भवद्भिः किमदर्शि ? यदि पेरेसरत्ना-कराणामग्र्योऽपि कश्चित्तत्राभविष्यत् नूनं रत्नभाभिस्तस्य चक्षुः प्रतिघातोऽभविष्यत् । हीरकमौक्तिकादिप्रचयं वहत इमानीश्वरा-न्महेश्वरांश्च दृष्ट्वा भारतवर्षीयाणां कोटिशो जनानां दशां च मनसि कृत्वा इदमेवैनानभिधित्सामि—भ्रातरः, यावल्लक्षशोऽकिञ्चनेभ्यः स्वदेशजेभ्य इमानि हीरकमौक्तिकादीनि स्वस्माच्छरीरादवरोप-यितुं नोद्युञ्जते भवन्तस्तावदस्य देशस्याभ्युत्थानमसंभवि ।

इदमपीह विवेच्यम् । इदं हि नः सर्वान् द्वित्रान् दिवसान् उदवेजयत्—श्रीमतो राजप्रतिनिधेरेभिः पथिभिर्यानावसरे सर्वे जनाः पर्याकुला आसन् । स्थाने स्थाने रक्षापुरुषा न्ययुज्यन्त, सायुधाः प्रहरिणश्चाजागरुः । इदं सर्वमवलोक्याहं चकितोऽभूवम् । असकृच्च मे मनसि प्रश्नोऽयमुदगात्—किमित्यस्मास्वेवमविश्वास इति रक्षापुरुषैरस्माकमनुसरणं किंहेतुकमितीदानीं विमृश्यम् । क्रुध्यद्भिर्गर्जद्भिः पाणिपादं ताडयद्भिरन्यद् वा किमपि कुर्वद्भि-रस्माभिः स्मरणीयं राज्यविप्लवकरो जनवर्ग उन्मादवेगजन्य इति । एतद्वर्गीयाणां स्वदेशवात्सल्यमनुमोदे । यदिमे स्वदेशानु-रागपरवशा मृत्युमपि न गणयन्ति तदहमाद्रिये । परं निवेदये नैतया विकृतयाऽराजकतया वो हृदि पदं करणीयम् । शासितृम-

होदयेभ्यो विवक्षितोऽर्थो विस्पष्टं निर्वक्तव्यः। परं यदि ते तन्न रोचयेयुस्तदर्थं यं दण्डं निपातयेयुः स सहर्षं सोढव्य इति। अहं कामये राज्ञां प्रजानां च परस्परमविश्वासोऽपेयादिति।

—(सम्पादकस्य कृतेः श्रीगान्धिचरितात्)

### प्रश्नाः

१—श्रीगान्धिनो भाषणस्यास्य सारं सरलया संस्कृतगिरा देहि।

२—एषु पदेषु प्रकृतिप्रत्ययप्रविभागः प्रदर्श्यः—अवरोपयितुम्, उद्युञ्जते, अजागरुः, आद्रिये, सोढव्यः।

३—सह् धातोर्लुङि विधिलिङि च रूपाणि लिखत।

४—'राज्ञां प्रजानां च परस्परमविश्वासः कथमपेयात्' इति विषयमवलम्ब्य नातिदीर्घः प्रबन्धो विरच्यताम्।

५—चक्षुःप्रतिघातः, किंहेतुकम्, शासितृमहोदयेभ्यः—एषु पदेषु कः समासः कश्च विग्रहः?

## द्विचत्वारिंशः पाठः

# आश्वमेधिकोऽश्वः

बटवः—(प्रविश्य) पश्यतु कुमारस्तदाश्चर्यम्।

लवः—दृष्टमवगतं च।

बटवः—कथं ज्ञायते?

लवः—लवः—ननु मूर्खाः पठितमेव हि युष्माभिरपि तत्काण्डम्।

किं न पश्यथ प्रत्येकं शतसङ्ख्याः कवचिनो दण्डिनो निषंगिणश्च रक्षितारः, तत्प्रायमेव बलमिदं दृश्यते । यदिह न प्रत्ययस्तद्गत्वा पृच्छत ।

बटवः—भो भोः किं प्रयोजनोऽयमश्वः परिवृतः पर्यटति ?

लवः—(सस्पृहमात्मगतम्) अये अश्वमेध इति नाम विश्वविजयिनां क्षत्रियाणामूर्जस्वलः सर्वक्षत्रपरिभावी महान् उत्कर्ष-निकषः ।

(नेपथ्ये)

योऽयमश्वः पताकेयमथवा वीरघोषणा ।
सप्तलोकैकवीरस्य दशकण्ठकुलद्विषः ।।

लवः—(सगर्वमिव) अहो सन्दीपनान्यक्षराणि ।

बटवः—किमुच्यते । प्राज्ञः खलु कुमारः ।

लवः—भो भोः किमक्षत्रिया पृथिवी यदेवमुद्घोष्यते ।

(नेपथ्ये) रे रे, महाराजं प्रति कुतः क्षत्रियाः ?

लवः—धिग्जाल्मान् ।

यदि ते सन्ति सन्त्येव केयमद्य विभीषिका ।
किमुक्तैरेभिरधुना तां पताकां हरामि वः ।।

भो भो बटवः परिवृत्य लोष्टैरभिघ्नन्तो नयतैनमश्वम् । एष रोहितानां मध्ये वराकश्चरतु ।

( प्रविश्य सक्रोधदर्पः ) धिक् चापलम् । किमुक्त-

वानसि ? तीक्ष्णतरा ह्यायुधश्रेणयः शिशोरपि दृप्तां वाचं न सहन्ते ।

बटवः—कुमार, कृतमनेनाश्वेन । तर्जयन्ति विस्फुरितशस्त्राः कुमारमायुधश्रेणयः । दूरे चाश्रमपदम् इतः तदेहि हरिणप्लुतैः पलायामहे ।

लवः—(विहस्य) किं नाम विस्फुरन्ति शस्त्राणि !

(इति धनुरारोपयन्)

ज्याजिह्वया वलयितोत्कट-कोटि-दंष्ट्र
मुद्गारि घोर-घन-घर्घर-घोषमेतत् ।
ग्रास-प्रसक्त-हसदन्तक-वक्त्र-यन्त्र-
जृम्भाविडम्बि विकटोदरमस्तु चापम् ॥

(इति यथोचितं परिक्रम्य निष्क्रान्ताः सर्वे)

(उत्तररामचरितात्)

### प्रश्नाः

१—अधोनिर्दिष्टाः पंक्तयः प्रकरणनिर्देशपुरस्सरं व्याख्येयाः—

क—अहो सन्दीपनान्यक्षराणि !

ख—रे रे महाराजं प्रति कुतः क्षत्रियाः ?

ग—किं नाम विस्फुरन्ति शस्त्राणि ?

२—कथं लवेन ज्ञातमाश्वमेधिकोऽश्वो विचरतीति ।

३—लवस्य चरित्रे बटूनामपेक्षया किं नाम वैशिष्ट्यमवलोक्यते ?

४—सर्वक्षत्रपरिभावी, सप्तलोकैकवीरस्य, दशकण्ठकुलद्विषः, उत्कर्ष-निकषः—एषु पदेषु समासविग्रहौ प्रदर्श्यौ ।

५—एषां शब्दानामर्थान् हिन्दीभाषायां लिखत—

निकषः, जाल्मान्, हरिणप्लुतैः, विस्फुरन्ति ।

६—रेखाङ्कितेषु पदेषु विभक्ति-प्रतिपादनं कुरुत—

क—धिग्जाल्मान् ।

ख—कृतमनेनाश्वेन ।

ग—दूरे चाश्रमपदम् ।

घ—महाराजं प्रति कुतः क्षत्रियाः ?

## त्रिचत्वारिंशः पाठः

# आभाणकाः

१—संहतिः श्रेयसी स्थेम्ने भिदा विध्वंसकारिणी ।

२—अत्यारूढिर्भवति महतामप्यपभ्रंशनिष्ठा ।

३—अतिदर्पे हता लङ्का ।

४—क—अतिपरिचयादवज्ञा ।

ख—मलये भिल्लपुरन्ध्री चन्दनतरुकाष्ठमिन्धनीकुरुते ।

ग—लोकः प्रयागवासी कूपे स्नानं समाचरति ।

५—निरस्तपादपे देशे एरण्डोऽपि द्रुमायते ।

६—दूरतःपर्वता रम्याः ।

७—निज-सदननिविष्टः श्वा न सिंहायते किम् ।

८—भक्षितेऽपि लशुने न शान्तो व्याधिः ।

९—याचको याचकं दृष्ट्वा श्वानवद् घुर्घुरायते ।

१०—अपि धन्वन्तरिर्वैद्यः किं करोतु गतायुषि ।

११—बन्धनभ्रष्टो गृहकपोतश्चिल्लाया मुखे पतितः ।

१२—मृगा मृगैः सङ्गमनुव्रजन्ति ।

१३—नहि कस्तूरिकामोदः शपथेन विभाव्यते ।

१४—मौनं स्वीकारलक्षणम् ।

१५—वरमद्य कपोतः श्वो मयूरात् ।

१६—स्वहस्तेनाङ्गारकर्षणम् ।

१७—भिन्नरुचिर्हि लोकः ।

१८—सूचीप्रवेशे मुसलप्रवेशः ।

१९—पिठरं क्वथदतिमात्रं निजपार्श्वानेव दहतितराम् ।

२०—उत्पतितोऽपि हि चणकः शक्तः किं भ्राष्ट्रकं भङ्क्तुम् ?

२१—न बिडालो भवेद्यत्र तत्र क्रीडन्ति मूषकाः ।

२२—अनुक्तमप्यूहति पण्डितो जनः ।

२३—सहसा विदधीत न क्रियाम् ।

२४—न साहसमनारुह्य नरो भद्राणि पश्यति ।

२५—रत्नोपहारैः किमु मर्कटानाम् ।

२६—संशयात्मा विनश्यति ।

२७—शठे शाठ्यं समाचरेत् ।

२८—सन्दीप्ते भवने तु कूपखननं प्रत्युद्यमः कीदृशः ?

२९—इन्द्रोऽपि लघुतां याति स्वयं प्रख्यापितैर्गुणैः ।

३०—स्वगुणाविष्क्रिया दोषो नास्ति भूतार्थशंसिने ।

३१—विपद् विपदमन्वेति सम्पदन्वेति सम्पदम् ।

३२—पयोऽपि शौण्डिकीहस्ते वारुणीत्यभिधीयते ।

३३—गवेषते केलिवनं प्रविष्टः क्रमेलकः कण्टकजालमेव ।

३४—संहतिः कार्यसाधिका ।

३५—निःसारस्य पदार्थस्य प्रायेणाडम्बरो महान् ।

३६—आम्रान् पृष्टः कोविदारानाचष्टे ।

३७—अङ्गीकृतं सुकृतिनः परिपालयन्ति ।

३८—सामानाधिकरण्यं हि तेजस्तिमिरयोः कुतः ?

३९—सर्वनाशे समुत्पन्ने अर्धं त्यजति पण्डितः ।

४०—हंसो हि क्षीरमादत्ते तन्मिश्रा वर्जयत्यपः ।

अभ्यासः—केचन आभाणकाः कण्ठे क्रियन्ताम्, स्वनिवन्धेषु च प्रयुज्यन्ताम् ।

## प्रश्नाः

१—आभाणकशब्दस्य कोऽर्थः ? आभाणकानां भाषायां किं स्थानम् ?

२—अधोनिर्दिष्टानां संस्कृताभाणकानां समानार्थका आभाणका हिन्दी-भाषायामांगलभाषायां वा प्रचरन्तः प्रदर्श्यन्ताम्—

क—विपद् विपदमन्वेति ।

ख—लोकः प्रयागवासी कूपे स्नानं समाचरति ।

ग—मृगा मृगैः सङ्गमनुव्रजन्ति ।

घ—वरमद्य कपोतः श्वो मयूरात् ।

(ङ) न विडालो भवेद्यत्र तत्र क्रीडन्ति मूषकाः ।

४—सामानाधिकरण्यमिति पदस्य व्युत्पत्तिमर्थं च वदत ।

५—अधोनिर्दिष्टानां शव्दानामर्था हिन्दीभाषायां लेख्याः—

संहतिः, स्थेम्ने, एरण्डः, पिठरम्, मर्कटानाम् क्रमेलकः, कोविदारान्, अङ्गीकृतम् ।

६—सर्वनाशे समुत्पन्ने अर्धं त्यजति पण्डितः—इत्यत्र श्लोकद्वितीयचरणादौ सन्ध्यभावे हेतुर्वक्तव्यः । सति सन्धौ किं रूपं स्यात् ?

## चतुश्चत्वारिंशः पाठः

# महाकवि-सूक्तयः

## कालिदासस्य

( रघुवंशे )

१. हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकाऽपि वा ।

२. पदं हि सर्वत्र गुणैर्निधीयते ।

३. आदानं हि विसर्गाय सतां वारिमुचामिव ।

४. तेजसां हि न वयः समीक्ष्यते ।

५. अव्याक्षेपो भविष्यन्त्याः कार्यसिद्धेर्हि लक्षणम् ।

६. काले खलु समारब्धाः फलं बध्नन्ति नीतयः ।

७. सद्य एव सुकृतां हि पच्यते कल्पवृक्षफलधर्मि कांक्षितम् ।

८. मरणं प्रकृतिः शरीरिणां विकृतिर्जीवितमुच्यते बुधैः ।

६. प्रतिकार-विधानमायुषः सति शेषे हि फलाय कल्पते ।

(कुमारसम्भवे)

१. न धर्मवृद्धेषु वयः समीक्ष्यते ।
२. क्लेशः फलेन हि पुनर्नवतां विधत्ते ।
३. विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीराः ।
४. शरीरमाद्यं खलु धर्मसाधनम् ।
५. एको हि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्कः ।
६. न रत्नमन्विष्यति मृग्यते हि तत् ।

(अभिज्ञानशाकुन्तले)

१. मनोरथानामतटप्रपाताः ।
२. सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरण-प्रवृत्तयः ।
३. किमिव हि मधुराणां मण्डनं नाकृतीनाम् ।

(मेघदूते)

१. रिक्तः सर्वो भवति हि लघुः पूर्णता गौरवाय ।
२. याच्ञा मोघा वरमधिगुणे नाधमे लब्धकामा ।
३. कस्यात्यन्तं सुखमुपनतं दुःखमेकान्ततो वा ।
नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण ॥

## भारवेः

(किरातार्जुनीये)

१. प्रकृतिः खलु सा महीयसः सहते नान्यसमुन्नतिं यया ।
२. सहसा विदधीत न क्रियाम् अविवेकः परमापदां पदम् ।
३. हितं मनोहारि च दुर्लभं वचः ।
४. अहो दुरन्ता बलवद्-विरोधिता ।
५. न महानिच्छति भूतिमन्यतः ।
६. न तितिक्षासममस्ति साधनम् ।

## माघस्य

(शिशुपालवधे)

१. शास्त्रं हि निश्चितधियां क्व न सिद्धिमेति ।
२. ध्रियते यावदेकोऽपि रिपुस्तावत् कुतः सुखम् ।
३ आरभन्तेऽल्पमेवाज्ञाः कामं व्यग्रा भवन्ति च ।
महारम्भाः कृतधियस्तिष्ठन्ति च निराकुलाः ॥
४. सती च योषित् प्रकृतिश्च निश्चला पुमांसमभ्येति भवान्त-रेष्वपि ।
५. समय एव करोति बलाबलम् ।
६. सदाऽभिमानैकधना हि मानिनः ।
७. श्रेयसि केन तृप्यते ।

### हर्षस्य

(नैषधचरिते)

१. कर्म कः स्वकृतमत्र न भुङ्क्ते ।
२. मितञ्च सारञ्च वचो हि वाग्मिता ।
३. आर्जवं हि कुटिलेषु न नीतिः ।
४. त्यजन्त्यसून् शर्म च मानिनो वरं त्यजन्ति न त्वेकमयाचित-
व्रतम् ।

आसु प्रत्येकं कवेरेका सूक्तिरवश्यमेव स्मर्तव्या ।

### प्रश्नाः

१—एषु कामपि सूक्तिमवलम्ब्य नातिदीर्घः प्रबन्ध एको विरच्यताम् ।
२—विकारहेतौ, बलवद्विरोधिता, तितिक्षासमम्, अयाचितव्रतम्—एषु समासविग्रहौ प्रदर्श्यौ ।
३—गौरवाय, वाग्मिता, आर्जयत्—एषु के तद्धितप्रत्ययाः ।
४—एषु पदेषु व्याकरण-वैशिष्ट्यं प्रदर्शय—
निधीयते, विक्रियन्ते, ध्रियते, विदधीत ।

## व्याकरणसहितः शब्दार्थकोषः

### प्रथमः पाठः

**शारदा**—भगवती सरस्वती का निज-नाम है।

**शारदाम्भोजवदना**—शरद् ऋतु के कमल के सदृश (खिले प्रसन्न) मुख वाली। शरदि भवं शारदम्। अम्भसि जायते इत्यम्भोजं कमलम्। शारदं च तद् अम्भोजं च इति शारदाम्भोजम्। तदिव वदनं यस्याः सा। बहुव्रीहि।

**वदनाम्बुजे**—कमल-सदृश मुख में। वदनम् अम्बुजमिव, तस्मिन्। कर्मधारय।

**सर्वदा**—(अ०) नित्य, सर्वदा (वि०) सब कुछ देने वाली।

**सन्निधिम्**—सन् चासौ निधिश्च तम्, उत्कृष्ट=बहुमूल्य निधि (रूप) (वि०) सन्निधि (पुं०) विद्यमानता, उपस्थिति, सामीप्य।

**क्रियात्**—'कृ' का प्र० पु० एक० आशीर्लिङ्

**विरिञ्चिः**—ब्रह्मा।

**माहेन्द्रनील०**—इन्द्रनील मणि की आभायुक्त कोमल अङ्गों वाली।

**मल्लिकामाला०**—चमेली की माला से सुशोभित केशों वाली। कुन्तल पुं० केश।

**त्रैलोक्यमाता**—त्रयो लोका एव त्रैलोक्यम्। स्वार्थे ष्यञ्। तीनों लोकों की माता। भूलोक, अन्तरिक्षलोक, द्युलोक—ये तीन लोक हैं। इन्हें भूर् भुवर् और स्वर् नाम से भी कहते हैं।

**दोर्भिः**—बाहुओं से। दोष् पुं०।

**कुन्देन्दु-शङ्खस्फटिकमणिनिभा**—कुन्द शङ्ख और बिलौर-सदृश। यहां कुन्दं च, इन्दुश्च, स्फटिकमणिश्च 'जातिरप्राणिनाम्' सूत्र से समाहार द्वन्द्व कुन्देन्दुस्फटिकमणि (नपुं० एक०) होकर पीछे निभ (=सदृश) के साथ समास होता है, पर विग्रह में 'निभ' शब्द नहीं होता, इसके अर्थ

को सदृश शब्द से कह दिया जाता है। अतः 'अस्वपदविग्रह' होने से नित्य-समास है।

**वाग्देवता**—वाणी की अधिष्ठात्री देवता। देव एव देवता। स्वार्थे तल्। देवता स्त्रीलिङ्ग है पर देव और देवता के अर्थ में कुछ भी भेद नहीं।

## द्वितीयः पाठः

**उपासते**—उप पूर्वक आस् (बैठना) का लट् लकार प्र० पु० बहुवचन।

**कूटस्थम्**—निर्विकार। कूटम् अयोघनः तद्वत् तिष्ठति।

**अव्यक्तासक्तचेतसाम्**—अव्यक्त (निराकार) में लगाये हुए चित्त वालों का।

**दुःखम्**—क्रिया वि०, दुःख से, कठिनता से।

**आधत्स्व**—आङ् पूर्वक धा धातु का आत्मने० लोट् म० पु० एक०। अर्थ—लगाओ।

**नचिरात्**—थोड़े ही समय में। यह न शब्द के साथ चिराद् (अ०) का समास है अतः एक पद है, दो पद नहीं। यह नञ्तत्पुरुष नहीं।

**निवसिष्यसि**—वसोगे, रहोगे। यह आर्ष प्रयोग है। व्याकरणानुसार 'निवत्स्यसि' रूप होगा।

**अभ्यासयोगेन**—भगवान् के नाम और गुणों का श्रवण, कीर्तन मनन तथा भगवत्प्राप्ति-विषयक शास्त्रों के पठन-पाठन आदि बार-बार करना 'अभ्यास' शब्द का अभिप्राय है।

**मैत्रः**—सब में मित्रभाव रखने वाला। मित्रम् एव मैत्रः। स्वार्थेऽण्।

**निर्ममः**—ममता-रहित। यह वस्तु मेरी है—इस भाव से रहित। निर्गतं ममत्वं यस्मात् सः।

**क्षमी**—क्षमावान्। व्रीह्यादित्वाद् इनिः।

**यतात्मा**—मन को वश में किये हुए। आत्मन्=मन।

**उद्विजते**—घबराता है, डरता है। विज् तुदा० आ० इस धातु का

प्रयोग प्रायः उत् उपसर्ग पूर्वक ही होता है।

**उदासीनः**—तटस्थ, विमुख। उत् उपसर्गपूर्वक आस् (बैठना) धातु से शानच् प्रत्यय।

**श्रद्दधानाः**—विश्वास करते हुए। श्रत्—सत्य। यह अव्यय है। कुछ शास्त्रीय कार्यों के लिए इसको उपसर्ग मान लिया जाता है।

**धर्म्यामृतम्**—धर्मयुक्त अमृत। धर्मादनपेतं धर्म्यम्।

**मत्परमाः**—अहं परमो येषाम्। मत्परायण, केवल मेरे आश्रित।

## तृतीयः पाठः

**उपरराम**—उप पूर्वक रम् का लिट् प्र० पु० एक० में रूप। टला, हट गया उपसर्गवश धातु का अर्थ बदल गया।

**समयधर्मः**—समझौता।

**उपभुङ्क्ते**—उपभोगता है। उप पूर्वक भुज् रुधादि का लट् प्र० पु० एक० में रूप।

**यथाबलम्**—अव्ययीभाव। बलमनतिक्रम्य।

**अरणी**—काष्ठ-विशेष (जण्डी की लकड़ी) जिसे मथ कर यज्ञ के लिए अग्नि निकाली जाती थी।

**हुताशनम्**—अग्नि को। हुतमश्नातीति हुताशनः। अग्नि के पर्याय सभी पुंल्लिङ्ग हैं।

**श्वापदः**—जंगली जानवर। शुन इव पादा अस्य।

**निर्वृतिभाजः**—सुख चैन वाले। निर्वृतिः (स्त्री०) सुख शान्ति। निर्वृतिं भजन्ते इति।

**उपतिष्ठते**—उपस्थित होता है। अकर्मक। इस अर्थ में परस्मैपद प्रयोग अशुद्ध होगा।

**भव्य**—(वि०) सुन्दर। भवितुमर्हति।

**क्षुत्क्षामकण्ठः**—भूख से सूखे हुए गले वाला। क्षुधा क्षामः (क्षीणः) कण्ठो यस्य सः।

**कोपाविष्टः**—कोप से भरा हुआ। कोपेन आविष्टः व्याप्तः।

**सृक्कणी**—होठों के किनारे। इसका द्विवचन में ही प्रयोग होता है।

**परिलेलिहन्**—बार-बार चाटता हुआ। यह यङ्लुक् में शतृप्रत्ययान्त रूप है। यद्यपि व्याकरण के अनुसार 'यङ्लुगन्त' का प्रयोग लोक में नहीं होता, केवल वेद ही उसके प्रयोग का विषय (क्षेत्र) है, तो भी 'छन्दोवत् कवयः कुर्वन्ति' इस वचन के अनुसार कवि लोग लौकिक साहित्य में भी इसका प्रयोग करते हुए देखे जाते हैं। यङ्लुगन्त परस्मैपद प्रत्यय लेता है और इसे अदादिगण में समझा जाता है।

## चतुर्थः पाठः

**विष्कम्भिताः**—पकड़ लिए, संस्कृत में—धृताः। विष्कम्भ पुं० अर्गल का वाची है। अर्गल का काम रोकना है। इसीलिए 'निरर्गल' बेरोकटोक को कहते हैं।

**उत्तिष्ठमानः**—उद्यम करता हुआ, यहाँ 'बढ़ता हुआ' अर्थ है। उत् पूर्वक स्था धातु से चेष्टा उद्यम करने अर्थ में आत्मनेपद होता है।

**वत्स्र्यन्तौ**—बढ़ते हुए। वृध् धातु का भविष्यत् अर्थ में शतृ प्रत्ययान्त रूप है। भविष्यत्काल को कहने के लिए 'स्य' प्रत्यय (विकरण शप् का अपवाद) भी आता है। वृध् आत्मनेपदी धातु है, पर 'स्य' प्रत्यय से परे परस्मैपद विकल्प से होता है। आत्मनेपद में 'वर्धिष्यमाणौ' ऐसा रूप होगा।

**आमयः**—रोग। यह पुं० है।

**शीर्णदन्तः**—टूटे हुए दाँतों वाला। शॄ (हिंसार्थक)—क्त। इसी धातु से शरीर, शरु, शर आदि शब्द बने हैं।

## पञ्चमः पाठः

**गिरिनिर्दरप्रदेशे**—पर्वतों के दराड़ स्थल में।

**डिम्भकैः**—बच्चों से। डिम्भ, डिम्भक पुं०—बच्चा।

**उपालम्भि**—पाई गई। उप पूर्वक लभ् का कर्मवाच्य लुङ्।

**तत्पथा**—स चासौ पन्थाश्च तत्पथः तेन, उस रास्ते से।

**पान्थेन**—यात्री ने। नित्यं पन्थानं गच्छतीति पान्थः।

**वातायनम्**—नपुं० खिड़की।

**अधिशयाने**—पड़ी हुई। अधि शी अदा० आत्मने०, लेटना, आधारित होना। अधि उपसर्ग लगने से धातु सकर्मक हो गई, जिससे 'वातायनमूलदेशम्' में द्वितीया हुई।

**विसिष्मिये**—विस्मित हुआ। वि पूर्वक स्मि धातु का लिट् प्र० पुरुष एकवचन।

**व्यचिन्वन्**—ढूंढा। वि पूर्वक 'चि' स्वादि उभय० का लङ् प्र० पु० बहुवचन।

**अवादिषुः**—बोले। वद् भ्वा० प० का लुङ् प्र० पु० बहु०।

**वर्षिष्ठाः**—बहुत बूढ़ा। वृद्ध—वर्षीयस्—वर्षिष्ठ।

**आलम्बनयष्टिः**—टेक, सहारे का ठण्डा।

**साह्येन**—सहायता से। सहभावः—साह्यम्।

**विममर्श**—विचार किया। वि पूर्वक मृश् छूना, तुदा० प० का लिट् प्र० पु० एक०।

**उप्तम्**—बोया। वप् भ्वा० उ० + क्त।

**अदात्**—दिया। दा जुहो० उ० का लुङ् प्र० पु० एक०।

**प्रचारयष्टिः**—चलने फिरने की लकड़ी। यष्टिः—स्त्री०।

**सञ्चरमाणः**—चलता फिरता। सम्पूर्वक चर् भ्वा० प० से आत्मने० में शानच् प्रत्यय हुआ है क्योंकि यह सम्पूर्वक चर् का तृतीया से युक्त होकर प्रयोग हुआ है।

**न्यरूपयत्**—देखा। निपूर्वक रूप प्रातिपादिक से णिच् (दर्शन अर्थ में) णिजन्त की धातु संज्ञा है।

**मन्थरश्रवणः**—जिसे कम सुनाई देता है। मन्थरं मन्दं श्रवणमस्य।

**अवर्तयत्**—वृत्ति करता था, निर्वाह करता था।

**अभ्यवाहारयम्**—खिलाता था। अभि अव पूर्वक हृ (ले जाना) भ्वा० उ० से णिच् करके लङ् प्र० पु० एकवचन में रूप।

**जहास**—हँसा। हस् भ्वा० प० का लिट् प्र० पु० एक०।

**पणं प्रति**—पण (पैसे) के विषय में।

**बीजाकृतम्**—बोया। बीज प्रातिपदिक से डाच् प्रत्यय। डाजन्त की गति संज्ञा होने से यह गति तत्पुरुष समास है।

**असूत**—पैदा करती थी। सू अदा० आत्मने० लङ् प्र० पु० एक०।

**श्रवःप्रियम्**—कानों का प्यारा। श्रवसोः प्रियम्। श्रवस् नपुं० कर्ण, कान। प्रीणातीति प्रियम्।

**जगृधुः**—लालच करते थे। गृध् दिवा० प० का लिट् प्र० पु० बहु०। स्मरण रहे यह धातु अकर्मक है। अतएव 'उत्पादिते' सप्तमी हुई है।

## षष्ठः पाठः

**न्याय्यान् पथः**—न्याय-युक्त मार्ग से। न्यायाद् अनपेतः—न्याय्यः। पथिन् पुं० है।

**विरमन्ति**—ठहर जाते हैं, विराम करते हैं। वि पूर्वक रम् भ्वा० आ०। वि उपसर्ग के कारण अर्थ भी बदला और परस्मैपद भी आया।

**त्रिभुवनम्**—तीन लोक। त्रयाणां भुवनानां समाहारः त्रिभुवनम्। द्विगु।

**पर्वतीकृत्य**—पर्वत-सा बड़ा करके। 'पर्वती' में 'च्वि' प्रत्यय है। 'पर्वतीकृत्य' गति तत्पुरुष है।

**दूरविलम्बिनः**—दूर तक नीचे लटकने वाले। दूरं विलम्बन्ते इत्येवंशीलाः।

**महाशैलशिला०**—पर्वत की बड़ी चट्टानों के समूह की तरह सख्त। शैल—पुं० है। शिलाः सन्त्यस्य इति शैलः।

**व्यसनम्**—लगन, आसक्ति।

**प्रकृतिसिद्धम्**—स्वभाव से सिद्ध। प्रकृत्या सिद्धम्।

**धैर्यम्**—धीरज। धीरस्य भावः ष्यञ्।

**सदसि**—सभा में। सदस् नपुं० लिङ्ग भी है और स्त्रीलिङ्ग भी। सदः सदसी सदांसि। सदाः सदसौ सदसः।

**पिशुनता**—चुगलखोरी।

**तीर्थम्**—जहां ऋषि महर्षि लोगों ने तपस्या की वह गङ्गादि नदी प्रदेश। यदध्यासितं महद्भिस्तद्धि तीर्थं प्रचक्षते—इस कथन के अनुसार और भी कोई महात्माओं की सन्निधि से पवित्रित स्थान।

**प्रच्छन्नगुप्तम्**—छिपा हुआ और सुरक्षित। प्रच्छन्नं च तद् गुप्तं च—कर्मधारय।

**केयूराणि**—बाहुभूषण, अंगद। केयूर नित्य नपुं० है, अतः कहीं कहीं जो 'केयूरा न विभूषयन्ति' ऐसा पाठ मिलता है वह त्याज्य है।

**वाग्भूषणं सततं भूषणम्**—ऐसा अन्वय है सतत—नित्य, जारी। सम्+तत—सतत अथवा सन्तत।

**प्रतिपाद्यमानम्**—दिया जा रहा,

**स्पर्धते**—होड़ लेता है, बराबर होने की इच्छा करता है।

**अवमंस्थाः**—अपमान मत कर। अवपूर्वक मन् (जानना) दिवा० आ० का लुङ् मध्यम पु० एक०। माङ् के योग से अट् आगम का लोप हुआ है। माङ् न होने पर अट् होने पर 'अवामंस्थाः' ऐसा रूप होगा।

## सप्तमः पाठः

**अधिष्ठाने**—नगर में।

**देशान्तरगमनमनाः**—विदेश जाना चाहता हुआ। अन्यो देशः—देशान्तरम्। देशान्तरे गमनम्—देशान्तरगमनम्—तत्र मनो यस्य सः। 'चन्द्रमस्' की तरह रूप चलेंगे।

**पुरुषाधमः**—पुरुषों में नीचतम। पुरुषेषु अधमः

**स्नानोपकरणहस्तम्**—स्नान-सामान (वस्त्रादि) हाथ में लिये हुए

